सति लोकविपरीतबुद्ध्यध्यारोपितं विपरीतलक्षणत्वं सुखदुःखादयश्च, न स्वतः। आत्मदृष्ट्यनुरूपाध्यारोपाच्च। यथा घनादिविप्रकीर्णे अम्बरे येनैव सवितृप्रकाशो न दृश्यते, स आत्मदृष्ट्यनुरूपमेवाध्यस्यति सवितेदानीमिह न प्रकाशयतीति सत्येव प्रकाशेऽन्यत्र भ्रान्त्या। एवमिह बौद्धादिवृत्त्युद्भवाभिभवाकुलभ्रान्त्याध्यारोपितः सुखदुःखादियोग उपपद्यते। तत्स्मरणाच्च तस्यैवेश्वरस्यैव हि स्मरणं "मत्तः स्मृतिर्ज्ञानमपोहनञ्च" "नादत्ते कस्यचित्पापम्" इत्यादि। अतो नित्यमुक्त एकस्मिन्सवितरीव लोकाविद्याध्यारोपितमीश्वरे संसारित्वम्। शास्त्रादिप्रामाण्यादभ्युपगमसंसारित्वं इत्यविरोध इति। एतेन प्रत्येकं ज्ञानादिभेदः प्रत्युक्तः। सौक्ष्म्यचैतन्यसर्वगतत्वाद्यविशेषे च भेदहेत्वभावात्। विक्रियावत्त्वे चानित्यत्वात्। मोक्षे च विशेषानभ्युपगमादभ्युपगमे चानित्यत्वप्रसङ्गात्। अविद्यावदुपलभ्यत्वाच्च भेदस्य तत्क्षयेऽनुपपत्तिरिति सिद्धमेकत्वम्। तस्माच्छरीरेन्द्रियमनोबुद्धिविषयवेदनासन्तानस्याहङ्कारसम्बन्धादज्ञानबीजस्य नित्यविज्ञानान्यनिमित्तस्यात्मतत्त्वयाथात्म्यविज्ञानाद्विनिवृत्तावज्ञानबीजस्य विच्छेद आत्मनो मोक्षसञ्ज्ञा, विपर्यये च बन्धसञ्ज्ञा, स्वरूपापेक्षत्वादुभयोः। ब्रह्म–ह इत्यैतिह्यार्थः—पुरा किल देवासुरसङ्ग्रामे जगत्स्थितिपरिपालयिषया आत्मानुशासनानुवर्तिभ्यो देवेभ्योऽर्थिभ्योऽर्थाय विजिग्येऽजैषीदसुरान्। ब्रह्मण इच्छानिमित्तो विजयो देवानां बभूवेत्यर्थः। तस्य ह ब्रह्मणो विजये देवा अमहीयन्त। यज्ञादिलोकस्थित्यपहारिष्वसुरेषु पराजितेषु देवा वृद्धिं पूजां वा प्राप्तवन्तः। त ऐक्षन्तेति मिथ्याप्रत्ययत्वाद्धेयत्वख्यापनार्थ आम्नायः॥ १ ॥

३.२-१२—ईश्वरनिमित्ते विजये स्वसामर्थ्यनिमित्तोऽस्माकमेवायं विजयोऽस्माकमेवायं महिमेत्यात्मनो जयादिश्रेयोनिमित्तं सर्वात्मानमात्मस्थं सर्वकल्याणास्पदमीश्वरमेवात्मत्वेनाबुद्ध्वा पिण्डमात्राभिमानाः सन्तो यं मिथ्याप्रत्ययं चक्रुस्तस्य पिण्डमात्रविषयत्वेन मिथ्याप्रत्ययत्वात्सर्वात्मेश्वरयाथात्म्यावबोधेन हातव्यताख्यापनार्थस्तद्धैषामित्याद्याख्यायिकाम्नायः। तद्ब्रह्म ह किलैषां देवानामभिप्रायं मिथ्याहङ्काररूपं विजज्ञौ विज्ञातवत्। ज्ञात्वा च मिथ्याभिमानशातनेन तदनुजिघृक्षया देवेभ्योऽर्थाय तेषामेवेन्द्रियगोचरे नातिदूरे प्रादुर्बभूव। महेश्वरशक्तिमायोपात्तेनात्यन्ताद्भुतेन प्रादुर्भूतं किल केनचिद्रूपविशेषेण। तत्किलोपलभमाना अपि

देवा न व्यजानन्त न विज्ञातवन्तः किमिदं यदेतद्यक्षं पूज्यमिति। तद्विनाया-ग्निमब्रुवन्। तृणानिधानेऽयमभिप्रायः—अत्यन्तसम्भावितयोरग्निमारुतयोस्तृणदह-नादानाशक्त्यात्मसम्भावना शातिता भवेदिति। इन्द्र आदित्यो वज्रभृद्वा, अवि-रोधात् इन्द्रोपसर्पणे ब्रह्म तिरोदध इत्यत्रायमभिप्रायः—इन्द्रोऽहमित्यधिकतमो-भिमानोऽस्य, सोऽहमग्न्यादिभिः प्राप्तं वाक्सम्भाषणमात्रमप्यनेन न प्राप्तोऽस्मी-त्यभिमानं कथं न नाम जह्यादिति। तदनुग्रहायैवान्तर्हितं तत् ब्रह्म बभूव स शान्ताभिमान इन्द्रोऽत्यर्थं ब्रह्म विजिज्ञासुर्यस्मिन्नाकाशे ब्रह्मणः प्रादुर्भाव आसी-त्तिरोधानं च, तस्मिन्नेव स्त्रियमतिरूपिणीं विद्यामाजगाम। अभिप्रायोद्बोधहेतु-त्वाद्रुद्रपत्न्युमा हैमवतीव सा बहुशोभमाना विद्यैव। विरूपोऽपि विद्यावान्बहु शोभते॥ २॥ इति तृतीयः खण्डः॥

४.१-३—तां च पृष्ट्वा तस्या एव वचनाद्विदाञ्चकार विदितवान्। अत इन्द्रस्य बोधहेतुत्वाद्विद्यैवोमा। "विद्यासहायवानीश्वर" इति स्मृतिः। यस्मादि-न्द्रविज्ञानपूर्वकमग्निवाय्विन्द्रास्ते ह्येनन्नेदिष्ठमतिसमीपं ब्रह्मविद्यया ब्रह्म प्राप्ताः सन्तः पस्पर्शुः स्पृष्टवन्तः। ते हि प्रथमः प्रथमं विदाञ्चकार विदाञ्चक्रुरित्येतत्। तस्माददितितरामतीत्यातिशयेन दीप्यन्तेऽन्यान्देवांस्ततोऽपीन्द्रोऽतितरां दीप्यते आदौ ब्रह्मविज्ञानात्॥ ३॥

४. ४—तस्यैष आदेशस्तस्य ब्रह्मण एष वक्ष्यमाण आदेश उपासनोपदेश इत्यर्थः। यस्माद्देवेभ्यो विद्युदिव सहसैव प्रादुर्भूतं ब्रह्म द्युतिमत्तस्माद्विद्युतो विद्योतनं यथा यदेतत् ब्रह्म व्यद्युतद्विद्योतितवत्। आ इवेत्युपमार्थ आशब्दः। यथा घनान्धकारं विदार्य विद्युत्सर्वतः प्रकाशते, एवं तद्ब्रह्म देवानां पुरतः सर्वतः तः प्रकाशवद्व्यक्तीभूतं अतो व्यद्युतदिवेत्युपास्यम्। "यथा सकृद्विद्युतं" इति च वाजसनेयके। यस्माच्चेन्द्रोपसर्पणकाले न्यमीमिषत्।— यथा कश्चिच्चक्षुर्निमेषणं कृतवानिति। इतीदित्यनर्थकौ निपातौ।—निमिषितवदिव तिरोभूतमित्येवं अधिदैवतं देवताया अधि यद्दर्शनमधिदैवतं तत्॥ ४॥

४ ५-अथानन्तरमध्यात्मं आत्मनोऽध्यात्मविषयमध्यात्मं, उच्यत इति वाक्यशेषः। यदेतद्यथोक्तलक्षणं ब्रह्म गच्छतीव प्राप्नोतीव विषयीकरोतीवेत्यर्थः। न पुनर्विषयीकरोति मनः मनसोऽविषयत्वात् ब्रह्मणोऽतो मनो न गच्छति। 'येना-

दुर्मनो मतं' [ १.६ ] इति हि चोक्तम् । गच्छतीवेति तु मनसोऽपि मनस्त्वात् आत्मभूतत्वाच्च ब्रह्मणस्तत्समीपे मनो वर्तत इत्युपस्मरत्यनेन मनसैव तद्ब्रह्म विद्वान् यस्मात्तस्मात् ब्रह्म गच्छतीवेत्युच्यते । अभीक्ष्णं पुनः पुनः । सङ्कल्पो ब्रह्मप्रेषितस्य मनसः । अत उपस्मरणसङ्कल्पादिभिर्लिङ्गैर्ब्रह्म मनआद्यात्मभूतमि त्युपास्यमित्यभिप्रायः ॥ ५ ॥

४. ६—तस्य चाध्यात्ममुपासने गुणो विधीयते-तद्ध तद्वनं तदेतद्ब्रह्म तच्च तद्वनं च तत्परोक्षं वनं सम्भजनीयम् । वननीयस्तत्कर्मणस्तस्मात्तद्वनं नाम । ब्रह्मणो गौणं हीदं नाम । तस्मादनेन गुणेन तद्वनमित्युपासितव्यम् । स यः कश्चिदेतद्य-थोक्तमेवं यथोक्तेन गुणेन वनमित्यनेन नाम्नाभिधेयं ब्रह्म वेदोपास्ते तस्यैतत्फलम्-च्यते—सर्वाणि भूतान्येनमुपासकमभिसंवाञ्छन्ति हाभिसम्भजन्ते सेवन्ते स्मेत्यर्थः । यथागुणोपासनं हि फलम् ॥ ६ ॥

४. ७—उपनिषदं भो ब्रूहीत्युक्तायामुपनिषदि शिष्येणोक्त आचार्य आह— उक्ता कथिता ते तुभ्यमुपनिषदात्मोपासनं च । अधुना ब्राह्मीं वाव ते तुभ्यं ब्रह्मणो ब्राह्मणजातेरुपनिषदमब्रूम वक्ष्याम इत्यर्थः । वक्ष्यति हि ब्राह्मीं, नोक्ता । उक्ता त्वात्मोपनिषत् । तस्माद्भूतामिप्रायोऽब्रूमेत्ययं शब्दः ॥ ७ ॥

४. ८—तस्यै तस्या वक्ष्यमाणाया उपनिषदस्तपो ब्रह्मचर्यादि दम उपशमः कर्माग्निहोत्रादीन्येतानि प्रतिष्ठा आश्रयः । एतेषु हि सत्सु ब्राह्मी उपनिषत्प्रति-ष्ठिता भवति । वेदाश्चत्वारोऽङ्गानि च सर्वाणि । प्रतिष्ठेत्यनुवर्तते । ब्रह्माश्रया हि विद्या । सत्यं यथाभूतवचनमपीडाकरं, आयतनं निवासः । सत्यवत्सु हि सर्वं यथोक्तमायतन इवावस्थितम् ॥ ८ ॥

४. ९—तामेतां तपआद्यङ्गां तत्प्रतिष्ठां ब्राह्मीमुपनिषदं सायतनामात्मज्ञान-हेतुभूतामेवं यथावद्यो वेदानुवर्तनेऽनुतिष्ठति, तस्यैतत्फलमाह—अपहत्य पाप्मानं अपक्षय्य धर्माधर्माविव्यर्थः । अनन्तेऽपारेऽविद्यमानान्ते स्वर्गे लोके सुखप्राये निर्दुःखात्मनि परे ब्रह्मणि ज्येये महति सर्वमहत्तरे प्रतितिष्ठति, सर्ववेदान्तवेद्यं ब्रह्मात्मत्वेनावगम्य तदेव ब्रह्म प्रतिपद्यते इत्यर्थः ॥ ९ ॥ इति चतुर्थः खण्डः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृती केनोपनिषद्वाक्यपदभाष्यं समाप्तम् ॥

---

ॐ

# श्रीमच्छङ्कराचार्यविरचितभाष्ययुता

# काठकोपनिषत् ।

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ॥ तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

**ॐ नमो भगवते वैवस्वताय मृत्यवे ब्रह्मविद्याचार्याय नचिकेतसे च ।**

---

अथ काठकोपनिषद्वल्लीनां सुखार्थप्रबोधनार्थमल्पग्रन्था वृत्तिरारभ्यते। सदेर्धातोर्विशरणगत्यवसादनार्थस्योपनिपूर्वस्य(१)क्विप्प्रत्ययान्तस्य रूपमिदमुपनिषदिति । उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते । केन पुनरर्थयोगेनोपनिषच्छब्देन विद्योच्यत इत्युच्यते । ये मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णाः सन्तः उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्यामुपसद्योपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद्धिंसनाद्विनाशनात् इत्यनेनार्थयोगेन विद्योपनिषदित्युच्यते । तथा च वक्ष्यति 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' [३.१५] इति । पूर्वोक्तविशेषणान्वा मुमुक्षून् परं ब्रह्म गमयतीति च ब्रह्मगमयितृत्वेन योगाद्ब्रह्मविद्योपनिषत् । तथा च वक्ष्यति 'ब्रह्म

---

(१) उपनिपूर्वस्येति— ननु उपनिषदो वृत्तिर्नारब्धव्या । प्राणिनां कामकलुषितचेतसामुपनिषच्छ्रवणात्पराङ्मुखत्वाद्विशिष्टस्याधिकारिणो दुर्निरूपत्वाद्बन्धस्य च सत्यस्य कर्मभ्य एव निवृत्तेरुपनिषज्जन्यविद्याया निष्प्रयोजनत्वज्जीवस्य चासंसारी ब्रह्मात्मतायाः प्रतिपादयितुमशक्यत्वेन निर्विषयत्वाच्चेत्याशङ्क्योपनिषच्छब्दनिर्वचनेन विद्याया विशिष्टाधिकार्यादिमत्त्वप्रदर्शनेन तज्जनकस्य ग्रन्थस्यापि विशिष्टाधिकार्यादिमत्त्वेन व्याख्येयत्वं दर्शयितुं प्रथममुपनिषच्छब्दस्वरूपसिद्धिं तावदाह उपनिपूर्वस्येति ।

प्राप्तो विरजोऽभूद्विमृत्युः' [६.१८] इति । लोकादिर्ब्रह्मजज्ञो(१)योऽग्निः तद्विषयाया विद्याया द्वितीयेन वरेण प्रार्थ्यमानायाः स्वर्गलोकफलप्राप्तिहेतुत्वेन गर्भवासजन्मजराद्युपद्रववृन्दस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्यावसादयितृत्वेन शैथिल्यापादनेन धात्वर्थयोगादग्निविद्याप्युपनिषदित्युच्यते । तथा च वक्ष्यति 'स्वर्गलोका अमृतत्वं भजन्ते' [१.१३] इत्यादि । ननु चोपनिषच्छब्देनाध्येतारो ग्रन्थमप्यभिलपन्ति । उपनिषदमधीमहे उपनिषदमध्यापयाम इति च । नैष दोषः, अविद्यादिसंसारहेतुविशरणादेः सदिधात्वर्थस्य ग्रन्थमात्रेऽसम्भवाद्विद्यायां च सम्भवात् ग्रन्थस्यापि तादर्थ्येन तच्छब्दत्वोपपत्तेः आयुर्वै घृतमित्यादिवत् । तस्माद्विद्यायां मुख्यया वृत्त्योपनिषच्छब्दो वर्तते, ग्रन्थे तु भक्त्येति । एवमुपनिषन्निर्वचनेनैव विशिष्टोऽधिकारी विद्यायामुक्तः । विषयश्च विशिष्ट उक्तो विद्यायाः परं ब्रह्म प्रत्यगात्मभूतम् । प्रयोजनं चास्या उपनिषद आत्यन्तिकी संसारनिवृत्तिर्ब्रह्मप्राप्तिलक्षणा । सम्बन्धश्चैवम्भूतप्रयोजनेनोक्तः । अतो यथोक्ताधिकारिविषयप्रयोजनसम्बन्धाया विद्यायाः करतलन्यस्तामलकवत्प्रकाशकत्वेन विशिष्टाधिकारिविषयप्रयोजनसम्बन्धा एता वल्ल्यो भवन्तीति । अतस्ता यथाप्रतिभानं व्याचक्ष्महे ॥

ॐ उशन्ह वै वाजश्रवसः सर्ववेदसं ददौ ।
तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥

तत्राख्यायिका विद्यास्तुत्यर्था । उशन्कामयमानो(२) ह वै इति वृत्तार्थस्मरणार्थौ निपातौ । वाजमन्नं तद्दानादिनिमित्तं श्रवो यशो यस्य स वाजश्रवा, रूढितो वा, तस्यापत्यं वाजश्रवसः । स किल विश्वजिता सर्वमेधेनेजे तत्फलं कामयमानः । तस्मिन्क्रतौ सर्ववेदसं सर्वस्वं धनं ददौ दत्तवान् । तस्य यजमानस्य ह नचिकेता नाम पुत्रः किलास बभूव ॥ १ ॥

---

(१) लोकादिर्ब्रह्मजज्ञ इति--भूरादिलोकानामादिः प्रथमजो ब्रह्मणो जातो ब्रह्मजः स एव जानातीति ज्ञः ।

(२) उशन्कामयमान इति--वश कान्तौ कान्तिरिच्छा । वशधातोः शत्रन्तं रूपमुशन्निति । श्रवः कीर्तिः सर्वमेधेन सर्वस्वदक्षिणेनेजे यजनं कृतवान् इत्यर्थः । इदं नाचिकेताख्यानं तैत्तिरीयब्राह्मणे २७ अध्याये ८ अनुवाके द्रष्टव्यम् ।

**तꣳह कुमारꣳ सन्तं दक्षिणासु नीयमानासु श्रद्धाविवेश सोऽमन्यत ॥ २ ॥**

तं ह नचिकेतसं कुमारं प्रथमवयसं सन्तमप्राप्तप्रजननशक्तिं बालमेव श्रद्धास्तिक्यबुद्धिः पितुर्हितकामप्रयुक्ताविवेश प्रविष्टवती। कस्मिन्काल इत्याह—ऋत्विग्भ्यः सदस्येभ्यश्च दक्षिणासु नीयमानासु विभागेनोपनीयमानासु दक्षिणार्थासु गोषु, स आविष्टश्रद्धो नचिकेता अमन्यत ॥ २ ॥

**पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः।**
**अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥ ३ ॥**

कथमित्युच्यते—पीतोदका इत्यादिना दक्षिणार्था गावो विशेष्यन्ते। पीतमुदकं याभिस्ताः पीतोदकाः। जग्धं भक्षितं तृणं याभिस्ता जग्धतृणाः। दुग्धो दोहः क्षीराख्यो यासां ता दुग्धदोहाः। निरिन्द्रिया प्रजननासमर्था(१) जीर्णा निष्फला गाव इत्यर्थः। यास्ता एवम्भूता गा ऋत्विग्भ्यो दक्षिणाबुद्ध्या ददत्प्रयच्छन्ननन्दा अनानन्दा असुखा नामेत्येतद्ये ते लोकास्तान्स यजमानो गच्छति ॥ ३ ॥

**स होवाच पितरं तत कस्मै मां दास्यसीति।**
**द्वितीयं तृतीयं तꣳहोवाच मृत्यवे त्वा ददामीति ॥ ४ ॥**

तदेवं क्रत्वसम्पत्तिनिमित्तं पितुरनिष्टं फलं मया पुत्रेण सता निवारणीयमात्मप्रदानेनापि क्रतुसम्पत्तिं कृत्वा इत्येवं मत्वा पितरमुपगम्य स होवाच पितरं—हे तत तात कस्मै ऋत्विग्विशेषाय दक्षिणार्थं मां दास्यसीति प्रयच्छसीत्येतत्। एवमुक्तेन पित्रोपेक्ष्यमाणोऽपि द्वितीयं तृतीयमप्युवाच कस्मै मां दास्यसि कस्मै मां दास्यसीति। नायं कुमारस्वभाव इति क्रुद्धः सन्पिता तं ह पुत्रं किलोवाच मृत्यवे वैवस्वताय त्वा त्वां ददामीति ॥ ४ ॥

**बहूनामेमि प्रथमो बहूनामेमि मध्यमः।**
**किꣳस्विद्यमस्य कर्तव्यं यन्मयाद्य करिष्यति ॥ ५ ॥**

स एवमुक्तः पुत्र एकान्ते परिदेवयाञ्चकार। कथमित्युच्यते—बहूनां

(१) अप्रजननसमर्था इति पाठान्तरम्।

शिष्याणां पुत्राणां वा एमि गच्छामि प्रथमः सन्मुख्यया शिष्यादिवृत्त्येत्यर्थः । मध्यमानां च बहूनां मध्यमो मध्यमयैव वृत्त्यैमि । नाधमया कदाचिदपि । तमेवं विशिष्टगुणमपि पुत्रं मां 'मृत्यवे त्वा ददामि' इत्युक्तवान्पिता । स किंस्विद्यमस्य कर्तव्यं प्रयोजनं मया प्रदत्तेन करिष्यति यत्कर्तव्यमद्य ? नूनं प्रयोजनमनपेक्ष्यैव क्रोधवशादुक्तवान्पिता । तथापि तत्पितुर्वचो मृषा मा भूदिति ॥ ५ ॥

एवं मत्वा परिदेवनापूर्वकमाह पितरं शोकाविष्टं किंवा मयोक्तमिति—

**अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे ।**
**सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः ॥ ६ ॥**

अनुपश्यालोचय विभावयानुक्रमेण(१) यथा येन प्रकारेण वृत्ताः पूर्वेऽतिक्रान्ताः पितृपितामहादयस्तव । तान्दृष्ट्वा च तेषां वृत्तमास्थातुमर्हसि । वर्तमानाश्चापरे साधवो यथा वर्तन्ते तांश्च तथा प्रतिपश्यालोचय । न च तेषां मृषाकरणं वृत्तं वर्तमानं वास्ति । तद्विपरीतमसतां च वृत्तं मृषाकरणम् । न च मृषाभूतं कृत्वा कश्चिदजरामरो भवति । यतः सस्यमिव मर्त्यो मनुष्यः पच्यते जीर्णो म्रियते, मृत्वा च सस्यमिवाजायते आविर्भवति पुनः एवमनित्ये जीवलोके किं मृषाकरणेन । पालयात्मनः सत्यम् । प्रेषय मां यमायेत्यभिप्रायः ॥ ६ ॥

**वैश्वानरः प्रविशति अतिथिर्ब्राह्मणो गृहान् ।**
**तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७ ॥**

स एवमुक्तः पितात्मनः सत्यतायै प्रेषयामास । स च यमभवनं गत्वा तिस्रो रात्रीरुवास यमे प्रोषिते(२) । प्रोष्यागतं यमममात्या भार्या वा ऊचुर्बोधयन्तो वैश्वानरोऽग्निरेव साक्षात्प्रविशत्यतिथिः सन्ब्राह्मणो गृहान्दहन्निव । तस्य दाहं शमयन्त इवाग्नेरेतां पाद्यासनादिदानलक्षणां शान्तिं कुर्वन्ति सन्तोऽतिथेर्यतः, अतो हराहर हे वैवस्वतोदकं नचिकेतसे पाद्यार्थम् । यतश्चाकरणे प्रत्यवायः श्रूयते (३) ॥ ७ ॥

(१) निभाल्यानुक्रमेणेति पाठान्तरम् ।

(२) यमे प्रोषिते —ब्रह्मभवनं गते ।

(३) यतश्चाकरणे प्रत्यवायः श्रूयते इति—"यस्याग्निहोत्रमदर्शपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान्हिनस्ति" इति श्रुताविस्यर्थः । पापस्य कर्मणः कार्यं प्रत्यवाय इत्युच्यत इति । मु० १ खं० २ म० ३

**आशाप्रतीक्षे सङ्गतꣳ सूनृतां चेष्टापूर्ते पुत्रपशूꣳश्च सर्वान्।**
**एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे॥८॥**

आशाप्रतीक्षे अनिर्ज्ञातप्राप्येष्टार्थप्रार्थना आशा, निर्ज्ञातप्राप्यार्थप्रतीक्षणं प्रतीक्षा, ते आशाप्रतीक्षे। सङ्गतं सत्संयोगजं फलं, सूनृतां च सूनृता हि प्रिया वाक्तन्निमित्तजं च। इष्टापूर्ते इष्टं यागजं फलं, पूर्तमारामादि क्रियाजं फलम्। पुत्रपशूंश्च पुत्रांश्च पशूंश्च सर्वान् एतत्सर्वं यथोक्तं वृङ्क्ते वर्जयति विनाशयतीत्येतत्, पुरुषस्याल्पमेधसोऽल्पप्रज्ञस्य। यस्यानश्नन्नभुञ्जानो ब्राह्मणो गृहे वसति। तस्मादनुपेक्षणीयः सर्वावस्थास्वप्यतिथिरित्यर्थः॥ ८॥

**तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः।**
**नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व॥९॥**

एवमुक्तो मृत्युरुवाच नचिकेतसमुपगम्य पूजापुरःसरम्। तिस्रो रात्रीर्यस्मादवात्सीरुषितवानसि गृहे मे ममानश्नन्हे ब्रह्मन्नतिथिः सन्नमस्यो नमस्कारार्हश्च, तस्मान्नमस्ते तुभ्यमस्तु भवतु। हे ब्रह्मन्स्वस्ति भद्रं मेऽस्तु। तस्माद्भवतोऽनशनेन मद्गृहवासनिमित्ताद्दोषात्। तत्प्राप्त्युपशमेन यद्यपि भवदनुग्रहेण सर्वं मम स्वस्ति स्यात्तथापि त्वदधिकसम्प्रसादनार्थमनशनेनोषितामेकैकां रात्रिं प्रति त्रीन्वरान्वृणीष्वाभिप्रेतार्थविशेषान्प्रार्थयस्व मत्तः॥ ९॥

**शान्तसङ्कल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माभि मृत्यो।**
**त्वत्प्रसृष्टं माभिवदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे॥१०॥**

नचिकेतास्त्वाह--यदि दित्सुर्वरान् शान्तसङ्कल्प उपशान्तः सङ्कल्पो यस्य मां प्रति, यमं प्राप्य किन्नु करिष्यति मम पुत्र इति, स शान्तसङ्कल्पः सुमनाः प्रसन्नमनाश्च यथा स्याद्वीतमन्युर्विगतरोषश्च गौतमो मम पिता माऽभि मां प्रति हे मृत्यो, किञ्च त्वत्प्रसृष्टं(१) त्वया विनिर्मुक्तं प्रेषितं गृहं प्रति मामभिवदेत्प्रतीतो लब्धस्मृतिः, स एवायं पुत्रो ममागत इत्येवं प्रत्यभिजानन्नित्यर्थः। एतत्प्रयोजनं त्रयाणां वराणां प्रथममाद्यं वरं वृणे प्रार्थये यत्पितुः परितोषणम्॥ १०॥

---

(१) त्वत्प्रसृष्टमिति—प्रेतीभूतोऽयमागतो नावलोकनीय इति मत्वोपेक्षां यथा न करोति तथा प्रसादं कुर्विति किञ्च त्वत्प्रसृष्टमिति।

**यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः ।**
**सुखं रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥११॥**

मृत्युरुवाच—यथा बुद्धिस्त्वयि पुरस्तात्पूर्वमासीत्स्नेहसमन्विता पितुस्तव भविता प्रीतिसमन्वितस्तव पिता तथैव प्रतीतः प्रतीतवान्सन् औद्दालकिः उद्दालक एवौद्दालकिः, अरुणस्यापत्यमारुणिर्द्व्यामुष्यायणो वा(१) मत्प्रसृष्टो मयाऽनुज्ञातः सन्नुत्तरा अपि रात्रीः सुखं प्रसन्नमनाः शयिता स्वप्ता वीतमन्युर्विगतमन्युश्च भविता स्यात्त्वां पुत्रं ददृशिवान्दृष्टवान्सन्मृत्युमुखान्मृत्युगोचरात्प्रमुक्तं सन्तम् ॥ ११ ॥

**स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं न जरया बिभेति ।**
**उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥१२॥**

नचिकेता उवाच—स्वर्गे लोके रोगादिनिमित्तं भयं किंचन किंचिदपि नास्ति । न च तत्र त्वं मृत्यो सहसा प्रभवसि, अतो जरया युक्त इह लोकवत्त्वत्तो न बिभेति कश्चित्तत्र । किंचोभे अशनायापिपासे तीर्त्वाऽतिक्रम्य शोकमतीत्य गच्छतीति शोकातिगः सन्मानसेन दुःखेन वर्जितो मोदते हृष्यति स्वर्गलोके दिव्ये ॥ १२ ॥

**स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् ।**
**स्वर्गलोका अमृतत्वं भजन्त एतद् द्वितीयेन वृणे वरेण ॥ १३ ॥**

एवंगुणविशिष्टस्य स्वर्गलोकस्य प्राप्तिसाधनभूतं स्वर्ग्यं अग्निं स त्वं मृत्युरध्येषि स्मरसि जानासीत्यर्थः । हे मृत्यो यतस्त्वं प्रब्रूहि कथय श्रद्दधानाय श्रद्धावते मह्यं स्वर्गार्थिने । येनाग्निना चितेन स्वर्गलोकाः स्वर्गो लोको येषां ते स्वर्गलोका यजमाना अमृतत्वममरणतां देवत्वं भजन्ते प्राप्नुवन्ति तदेतदग्निविज्ञानं द्वितीयेन वरेण वृणे ॥ १३ ॥

**प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।**
**अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् ॥१४॥**

---

(१) द्व्यामुष्यायणो वेति—अमुष्य प्रख्यातस्यापत्यमामुष्यायणः । द्वयोः पित्रोः पूर्वभाषादिना सम्बन्धि चासावामुष्यायणश्च । न जारज इत्यर्थः ।

मृत्योः प्रतिज्ञा इयं—प्र ते तुभ्यं प्रब्रवीमि। यत्त्वया प्रार्थितं तदु मे मम वचसो निबोध बुध्यस्वैकाग्रमनाः सन् स्वर्ग्यं स्वर्गाय हितं स्वर्गसाधनमग्निं हे नचिकेतः प्रजानन्विज्ञातवान्सन्नहं इत्यर्थः। प्रब्रवीमि तन्निबोधेति च शिष्य-बुद्धिसमाधानार्थं वचनम्। अधुनाग्निं स्तौति—अनन्तं लोकाप्तिं स्वर्गलोकफलप्राप्तिसाधनमित्येतत्। अथो अपि प्रतिष्ठामाश्रयं(१) जगतो विराड्रूपेण तमेतमग्निं मयोच्यमानं विद्धि विजानीहि त्वं निहितं स्थितं गुहायां विदुषां बुद्धौ निविष्ट-मित्यर्थः॥ १४॥

**लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा।**
**स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाह तुष्टः॥१५॥**

इदं श्रुतेर्वचनम्(२)। लोकादिं लोकानामादिं प्रथमशरीरित्वादग्निं तं प्रकृतं नचिकेतसा प्रार्थितमुवाचोक्तवान्मृत्युस्तस्मै नचिकेतसे। किञ्च या इष्टकाश्चेतव्याः स्वरूपेण, यावतीर्वा सङ्ख्यया, यथा वा चीयतेऽग्निर्येन प्रकारेण सर्वमेतदुक्तवा-नित्यर्थः। स चापि नचिकेतास्तन्मृत्युनोक्तं प्रत्यवदत् यथावत्प्रत्ययेनावदत्प्रत्यु-च्चारितवान्। अथ अस्य प्रत्युच्चारणेन तुष्टः सन्मृत्युः पुनरेवाह वरत्रयव्यतिरे-केणान्यं वरं दित्सुः॥ १५॥

**तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः।**
**तवैव नाम्ना भवितायमग्निः सृङ्कां चेमामनेकरूपां गृहाण॥१६॥**

कथं, तं नचिकेतसमब्रवीत्प्रीयमाणः शिष्यस्य योग्यतां पश्यन्प्रीयमाणः प्रीति-मनुभवन्महात्माऽक्षुद्रबुद्धिर्वरं तव चतुर्थमिह प्रीतिनिमित्तमद्येदानीं ददामि भूयः पुनः प्रयच्छामि। तवैव नचिकेतसो नाम्नाऽभिधानेन प्रसिद्धो भविता मयो-च्यमानोऽयमग्निः। किञ्च सृङ्कां शब्दवतीं रत्नमयीं मालामिमामनेकरूपां विचित्रां

---

(१) प्रतिष्ठामाश्रयमिति—इयं च वक्ष्यमाणमृत्योः प्रतिज्ञाऽवगन्तव्या "स त्रेधा-त्मानं व्यकुरुते"ति श्रुतेरग्निवाय्वादित्यरूपेण समष्टिरूपो विराडेव व्यवस्थित इति, तेन विराड्रूपेणाग्निर्जगतः प्रतिष्ठेत्युच्यते।

(२) इदं श्रुतेर्वचनमिति—सप्रपञ्चमग्निज्ञानं चयनप्रकरणाद्द्रष्टव्यमिति श्रुति-रस्मान् बोधयतीत्याह—इदं श्रुतेर्वचनमिति।

गृहाण स्वीकुरु । यद्वा, सृङ्कामकुत्सितां गतिं कर्ममयीं गृहाण । अन्यदपि कर्मविज्ञानमनेकफलहेतुत्वात्स्वीकुर्वित्यर्थः ॥ १६ ॥

पुनरपि कर्मस्तुतिमेवाह —

**त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू ।**
**ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥१७॥**

त्रिणाचिकेतः त्रिः कृत्वा नाचिकेतोऽग्निश्चितो येन स त्रिणाचिकेतस्तद्विज्ञानतदध्ययनतदनुष्ठानवान्वा । त्रिभिर्मातृपित्राचार्यैरेत्य प्राप्य सन्धिं सन्धानं सम्बन्धं मात्राद्यनुशासनं यथावत्प्राप्येत्येतत् । तद्धि प्रामाण्यकारणं श्रुत्यन्तरादवगम्यते 'यथा मातृमान्पितृमान्' इत्यादेः । वेदस्मृतिशिष्टैर्वा प्रत्यक्षानुमानागमैर्वा । तेभ्यो हि विशुद्धिः प्रत्यक्षा । त्रिकर्मकृत् इज्याध्ययनदानानां कर्ता तरति अतिक्रामति जन्ममृत्यू । किञ्च ब्रह्मजज्ञं ब्रह्मणो हिरण्यगर्भाज्जातो ब्रह्मजः, ब्रह्मजश्चासौ ज्ञश्चेति ब्रह्मजज्ञः सर्वज्ञो ह्यसौ । तं देवं द्योतनाज्ज्ञानादिगुणवन्तमीड्यं स्तुत्यं विदित्वा शास्त्रतो, निचाय्य दृष्ट्वा चात्मभावेन(१) इमां स्वबुद्धिप्रत्यक्षां शान्तिमुपरतिमत्यन्तमेत्यतिशयेनेति । वैराजं पदं ज्ञानकर्मसमुच्चयानुष्ठानेन प्राप्नोतीत्यर्थः ॥ १७ ॥

इदानीमग्निविज्ञानचयनफलमुपसंहरति प्रकरणं च —

**त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम् ।**
**स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥१८॥**

त्रिणाचिकेतस्त्रयं यथोक्तं 'या इष्टका यावतीर्वा यथा वा' इत्येतद्विदित्वा अवगम्य यश्चैवमात्मरूपेणाग्निं विद्वांश्चिनुते निर्वर्तयति नाचिकेतमग्निं क्रतुं स मृत्युपाशानधर्माज्ञानरागद्वेषादिलक्षणान्पुरतोऽग्रतः पूर्वमेव शरीरपातादित्यर्थः प्रणोद्यापहाय शोकातिगो मानसैर्दुःखैर्वर्जित इत्येतत् मोदते स्वर्गलोके वैराजे विराडात्मस्वरूपप्रतिपत्त्या ॥ १८ ॥

---

(१) दृष्ट्वा चात्मभावेनेति—अयमर्थः विंशत्यधिकानि सप्तशतानि इष्टकानां सङ्ख्या, संवत्सरस्याहोरात्राणि च तावत्सङ्ख्यकान्येव सङ्ख्यासामान्यात्तैरिष्टकाभिर्यश्चितोऽग्निरहमित्यात्मभावेन ध्यात्वेति ।

**एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण ।**
**एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व १९**

एष ते तुभ्यमग्निर्वरो हे नचिकेतः, स्वर्ग्यः स्वर्गसाधनो यमग्निं वरं अवृणीथाः प्रार्थितवानसि द्वितीयेन वरेण, सोऽग्निर्वरो दत्त इत्युक्तोपसंहारः। किञ्चैतमग्निं तवैव नाम्ना प्रवक्ष्यन्ति जनासो जना इत्येतत्। एष वरो दत्तो मया चतुर्थस्तुष्टेन। तृतीयं वरं नचिकेतो वृणीष्व। तस्मिन्नदत्ते ऋणवानेवाहमित्याभिप्रायः॥ १९॥

एतावद्व्यतिक्रान्तेन विधिप्रतिषेधार्थेन मन्त्रब्राह्मणेनावगन्तव्यं यद्वरद्वयसूचितं वस्तु नात्मतत्त्वविषययाथात्म्यविज्ञानम्। अतो विधिप्रतिषेधार्थविषयस्य आत्मनि क्रियाकारकफलाध्यारोपणलक्षणस्य स्वाभाविकस्याज्ञानस्य संसारबीजस्य निवृत्त्यर्थं तद्विपरीतब्रह्मात्मैकत्वविज्ञानं क्रियाकारकफलाध्यारोपणलक्षणशून्यं आत्यन्तिकनिःश्रेयसप्रयोजनं वक्तव्यमित्युत्तरो ग्रन्थ आरभ्यते। तमेतमर्थं द्वितीयवरप्राप्त्याऽप्यकृतार्थत्वं तृतीयवरगोचरमात्मज्ञानमन्तरेण इत्याख्यायिकया प्रपञ्चयति—

**येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके।**
**एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः॥ २०॥**

यतः पूर्वस्मात्कर्मगोचरात्साध्यसाधनलक्षणादनित्याद्विरक्तस्यात्मज्ञानेऽधिकार इति तन्निन्दार्थं पुत्राद्युपन्यासेन प्रलोभनं क्रियते। नचिकेता उवाच 'तृतीयं वरं नचिकेतो वृणीष्व' इत्युक्तः सन्—येयं विचिकित्सा संशयः प्रेते मृते मनुष्ये, अस्तीत्येकेऽस्ति शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तो देहान्तरसम्बन्ध्यात्मेत्येके मन्यन्ते, नायमस्तीति चैके, नायमेवंविधो अस्तीति चैके। अतश्चास्माकं न प्रत्यक्षेण नापि वानुमानेन निर्णयविज्ञानम्। एतद्विज्ञानाधीनो हि परः पुरुषार्थ इत्यत एतद्विद्यां विजानीयामहमनुशिष्टो ज्ञापितस्त्वया। वराणामेष वरस्तृतीयोऽवशिष्टः॥ २०॥

किमयमेकान्ततो निःश्रेयससाधनात्मज्ञानार्हो न वा इत्येतत्परीक्षणार्थमाह—

**देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्मः।**
**अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् २१**

देवैरप्यत्र एतस्मिन्वस्तुनि विचिकित्सितं संशयितं पुरा पूर्वम् । न हि सुविज्ञेयं सुष्ठु ज्ञेयं असकृत् श्रुतमपि प्राकृतैर्जनैः यतोऽणुः सूक्ष्म एष आत्माख्यो धर्मः । अतोऽन्यमसन्दिग्धफलं वरं नचिकेतो वृणीष्व, मा मोपरोत्सीरुपरोधं मा कार्षीः अधमर्णमिवोत्तमर्णः । अतिसृज विमुञ्चैनं वरं मा मां प्रति ॥ २१ ॥

एवमुक्तो नचिकेता आह —

**देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुज्ञेयमात्थ ।**
**वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् २२**

देवैरत्रापि एतस्मिन्वस्तुनि विचिकित्सितं किलेति भवत एव नः श्रुतम् । त्वं च मृत्यो यदस्मान्न सुज्ञेयमात्मतत्त्वमात्थ कथयसि । अतः पण्डितैरप्यवेदनीयत्वाद्वक्ता चास्य धर्मस्य त्वादृक्त्वत्तुल्योऽन्यः पण्डितश्च न लभ्योऽन्विष्यमाणोऽपि अयं तु वरो निःश्रेयसप्राप्तिहेतुः । अतो नान्यो वरस्तुल्यः सदृशोऽस्त्येतस्य कश्चिदपि, अनित्यफलत्वादन्यस्य सर्वस्यैवेत्यभिप्रायः ॥ २२ ॥

एवमुक्तोऽपि पुनः प्रलोभयन्नुवाच मृत्युः—

**शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्तिहिरण्यमश्वान् ।**
**भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥२३॥**

शतायुषः शतं वर्षाण्यायूंषि येषां तान् शतायुषः पुत्रपौत्रान्वृणीष्व । किञ्च गवादिलक्षणान्बहून्पशून्, हस्तिहिरण्यं हस्ती च हिरण्यं च हस्तिहिरण्यं, अश्वांश्च । किञ्च भूमेः पृथिव्या महद्विस्तीर्णमायतनमाश्रयं मण्डलं (१) साम्राज्यं वृणीष्व । किञ्च सर्वमप्येतदनर्थकं स्वयं चेदल्पायुरित्यत आह — स्वयं च त्वं जीव धारय शरीरं समग्रेन्द्रियकलापं शरदो वर्षाणि यावदिच्छसि जीवितुम् ॥ २३ ॥

**एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च ।**
**महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि २४**

एतत्तुल्यमेतेन यथोपदिष्टेन सदृशमन्यमपि यदि मन्यसे वरं तमपि वृणीष्व । किञ्च वित्तं प्रभूतं हिरण्यरत्नादि चिरजीविकां च सह वित्तेन वृणीष्वे-

(१) मण्डलमिति—आयतनशब्दो जनपदरक्षणे लक्षणया वर्तते इत्याह— मण्डलेति । चत्वारिंशद्योजनमिते देशे । सम्राजः कर्म साम्राज्यं जनपदरक्षणमित्यर्थः ।

त्येतत् । किं वहुना, महाभूमौ महत्यां भूमौ राजा नचिकेतस्त्वमेधि भव । किञ्चान्यत् कामानां दिव्यानां मानुषाणां च त्वा त्वां कामभाजं कामभागिनं कामार्हं करोमि, सत्यसङ्कल्पो ह्यहं देवः ॥ २४ ॥

**ये ये कामा दुर्लभा मर्त्यलोके सर्वान्कामाꣳश्छन्दतः प्रार्थयस्व । इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः ॥ आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः २५**

ये ये कामाः प्रार्थनीया दुर्लभाश्च मर्त्यलोके सर्वांस्तान्कामाञ्छन्दत इच्छातः प्रार्थयस्व । किञ्चेमा दिव्या अप्सरसो, रमयन्ति पुरुषानिति रामाः, सह रथैर्वर्तन्त इति सरथाः, सतूर्याः सवादित्राः, ताश्च न हि लम्भनीयाः प्रापणीया ईदृशा एवंविधा मनुष्यैर्मर्त्यैरस्मदादिप्रसादमन्तरेण । आभिर्मत्प्रत्ताभिर्मया प्रदत्ताभिः परिचारिणीभिः परिचारयस्वात्मानं, पादप्रक्षालनादिशुश्रूषां कारयात्मन इत्यर्थः । नचिकेतो, मरणं मरणसम्बद्धं प्रश्नं प्रेतेऽस्ति नास्तीति काकदन्तपरीक्षारूपं मानुप्राक्षीः मैवं प्रष्टुमर्हसि ॥ २५ ॥

एवं प्रलोभ्यमानोऽपि नचिकेता महाह्रदवदक्षोभ्य आह—

**श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः । अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥ २६ ॥**

श्वो भविष्यन्ति न भविष्यन्ति वेति सन्दिह्यमान एव येषां भावो भवनं त्वयोपन्यस्तानां भोगानां ते श्वोभावाः । किञ्च मर्त्यस्य मनुष्यस्यान्तक हे मृत्यो, यदेतत्सर्वेन्द्रियाणां तेजस्तज्जरयन्त्यपक्षयन्ति अप्सरःप्रभृतयो भोगा अनर्थायैवैते धर्मवीर्यप्रज्ञातेजोयशःप्रभृतीनां क्षपयितृत्वात् । यां चापि दीर्घजीविकां त्वं दित्ससि तत्रापि शृणु । सर्वं यद्ब्रह्मणोऽपि जीवितमायुरल्पमेव, किमुतास्मदादिदीर्घजीविका । अतस्तवैव तिष्ठन्तु वाहा रथादयस्तथा तव नृत्यगीते च ॥ २६ ॥

**न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा । जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव २७**

किञ्च न प्रभूतेन वित्तेन तर्पणीयो मनुष्यः । न हि लोके वित्तलाभः कस्यचित्तृप्तिकरो दृष्टः । यदि नामास्माकं वित्ततृष्णा स्याल्लप्स्यामहे प्राप्स्यामहे

वित्तमद्राक्ष्म दृष्टवन्तो वयं चेत्त्वा त्वाम् । जीवितमपि तथैव, जीविष्यामो यावद्याम्ये पदे त्वमीशिष्यसीशिष्यसे प्रभुः स्याः । कथं हि मर्त्यस्त्वया समेत्याल्पधनायुर्भवेत् । वरस्तु मे वरणीयः स एव यदात्मविज्ञानम् ॥ २७ ॥

**अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन् ।**
**अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥ २८ ॥**

यतश्च अजीर्यतां वयोहानिमप्राप्नुवताममृतानां सकाशमुपेत्योपगम्यात्मन उत्कृष्टं प्रयोजनान्तरं प्राप्तव्यं तेभ्यः प्रजानन्नुपलभमानः स्वयं तु जीर्यन्मर्त्यो जरामरणवान्क्वधःस्थः कुः पृथिवी अधश्चासावन्तरिक्षादिलोकापेक्षया तस्यां तिष्ठतीति क्वधःस्थः सन्कथमेवमविवेकिभिः प्रार्थनीयं पुत्रवित्ताद्यस्थिरं वृणीते । 'क्व तदास्थः' इति वा पाठान्तरम् । अस्मिन्पक्षे चैवमक्षरयोजना तेषु पुत्रादिष्वास्था स्थितिः तात्पर्येण वर्तनं यस्य स तदास्थः, ततोऽधिकतरं पुरुषार्थं दुष्प्रापमपि प्रापिपयिषुः क्व तदास्थो भवेत् ? न कश्चित्तदसारज्ञस्तदर्थी स्यादित्यर्थः । सर्वो ह्युपर्युपर्येव बुभूषति लोकस्तस्मान्न पुत्रवित्तादिलाभैः प्रलोभ्योऽहम् । किञ्चाप्सरःप्रमुखान्वर्णरतिप्रमोदाननवस्थितरूपतयाभिध्यायन्निरूपयन्यथावदतिदीर्घे जीविते को विवेकी रमेत ॥ २८ ॥

**यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्साम्पराये महति ब्रूहि नस्तत् ।**
**योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥ २९ ॥**

**इति काठकोपनिषदि प्रथमा वल्ली ॥ १ ॥**

अतो विहायानित्यैः कामैः प्रलोभनं यन्मया प्रार्थितं यस्मिन्प्रेते इदं विचिकित्सनं विचिकित्सन्त्यस्ति नास्तीत्येवम्प्रकारं, हे मृत्यो, साम्पराये परलोकविषये महति महत्प्रयोजननिमित्ते आत्मनो निर्णयविज्ञानं यत्तत् ब्रूहि कथय नोऽस्मभ्यम् । किं बहुना । योऽयं प्रकृत आत्मविषयो वरो गूढं गहनं दुर्विवेचनं प्राप्तोऽनुप्रविष्टः, तस्माद्वरादन्यमविवेकिभिः प्रार्थनीयमनित्यविषयं वरं नचिकेता न वृणीते मनसापीति श्रुतेर्वचनमिति ॥ २९ ॥

इति कठवल्ल्यां प्रथमवल्लीभाष्यम् ॥ १ ॥

## अथ द्वितीया वल्ली ।

परीक्ष्य शिष्यं विद्यायोग्यतां चावगम्याह—

**अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषꣳ सिनीतः ।**
**तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते १**

अन्यत्पृथगेव श्रेयो निःश्रेयसं तथान्यदुतैव अपि च प्रेयः प्रियतरमपि ते प्रेयःश्रेयसी उभे नानार्थे भिन्नप्रयोजने सती पुरुषमधिकृतं वर्णाश्रमादिविशिष्टं सिनीतो बध्नीतः ताभ्यां विद्याविद्याभ्यामात्मकर्तव्यतया प्रयुज्यते सर्वः पुरुषः । श्रेयःप्रेयसोर्ह्यभ्युदयामृतत्वार्थी पुरुषः प्रवर्तते । अतः श्रेयः प्रेयः प्रयोजनकर्तव्यतया,ताभ्यां बद्ध इत्युच्यते सर्वः पुरुषः । ते यद्यप्येकैकपुरुषार्थसम्बन्धिनी विद्याविद्यारूपत्वाद्विरुद्धे इत्यन्यतरापरित्यागेनैकेन पुरुषेण सहानुष्ठातुमशक्यत्वात्तयोर्हित्वा अविद्यारूपं प्रेयः, श्रेय एव केवलमाददानस्योपादानं कुर्वतः साधु शोभनं शिवं भवति । यस्त्वदूरदर्शी विमूढो हीयते वियुज्यतेऽर्थात्पुरुषार्थात्पारमार्थिकात्प्रयोजनान्नित्यात्प्रच्यवते इत्यर्थः । कोऽसौ य उ प्रेयो वृणीते उपादत्ते इत्येतत् ॥१॥

**श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः ।**
**श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते २**

यद्युभे अपि कर्तुं स्वायत्ते पुरुषेण, किमर्थं प्रेय एवाऽऽदत्ते बाहुल्येन लोक इत्युच्यते—सत्य स्वायत्ते, तथापि साधनतः फलतश्च मन्दबुद्धीनां दुर्विवेकरूपे सती व्यामिश्रीभूते इव मनुष्यं पुरुषं एतः प्राप्नुतः श्रेयश्च प्रेयश्च । अतो हंस इवाम्भसः पयः, तौ श्रेयः प्रेयःपदार्थौ सम्परीत्य सम्यक्परिगम्य मनसालोच्य गुरुलाघवं विविनक्ति पृथक्करोति धीरो धीमान् । विविच्य च श्रेयो हि श्रेय एवाभिवृणीते प्रेयसोऽभ्यर्हिततत्वात् श्रेयसः । कोऽसौ धीरः । यस्तु मन्दोऽल्पबुद्धिः स सदसद्विवेकासामर्थ्यात् योगक्षेमाद्योगक्षेमनिमित्तं शरीराद्युपचयरक्षणनिमित्तमित्येतत् प्रेयः पशुपुत्रादिलक्षणं वृणीते ॥ २ ॥

**स त्वं प्रियान्प्रियरूपाꣳश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः ।**
**नैताꣳ सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥३॥**

स त्वं पुनः पुनः मया प्रलोभ्यमानोऽपि प्रियान्पुत्रादीन्प्रियरूपांश्चाप्सरःप्रभृतिलक्षणान्कामानभिध्यायंश्चिन्तयंस्तेषामनित्यत्वासारत्वादिदोषान् हे नचिकेतोऽत्यस्राक्षीरतिसृष्टवानत्यक्तवानस्यहो बुद्धिमत्ता तव । नैतामवाप्तवानसि सृङ्कां सृतिं कुत्सितां मूढजनप्रवृत्तां वित्तमयीं धनप्रायाम् । यस्यां सृतौ मज्जन्ति सीदन्ति बहवोऽनेके मूढा मनुष्याः ॥ ३ ॥

**दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।**
**विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त ॥४॥**

'तयोः, श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते' इत्युक्तं तत्कस्मात् ? यतो दूरं दूरेण महतान्तरेणैते विपरीते अन्योन्यव्यावृत्तरूपे विवेकाविवेकात्मकत्वात्तमःप्रकाशाविव विषूची विषूच्यौ नानागती भिन्नफले संसारमोक्षहेतुत्वेनेत्येतत् । के ते इत्युच्यते—या चाविद्या प्रेयोविषया विद्येति च श्रेयोविषया ज्ञाता निर्ज्ञातावगता पण्डितैः तत्र विद्याभीप्सिनं विद्यार्थिनं नचिकेतसं त्वामहं मन्ये । कस्मात् यस्मादविद्वद्बुद्धिप्रलोभिनः कामा अप्सरःप्रभृतयो बहवोऽपि त्वा त्वां नालोलुपन्त न विच्छेदं कृतवन्तः श्रेयोमार्गात् आत्मोपभोगाभिवाञ्छासम्पादनेन । अतो विद्यार्थिनं श्रेयोभाजनं मन्ये इत्यभिप्रायः ॥ ४ ॥

**अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः ।**
**दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥५॥**

ये तु संसारभाजो जना अविद्यायामन्तरे मध्ये घनीभूत इव तमसि वर्तमाना वेष्ट्यमानाः पुत्रपश्वादितृष्णापाशशतैः, स्वयं धीराः प्रज्ञावन्तः पण्डिताः शास्त्रकुशलाश्चेति मन्यमानास्ते दन्द्रम्यमाणा अत्यर्थं कुटिलामनेकरूपां गतिं गच्छन्तो जरामरणरोगादिदुःखैः परियन्ति परिगच्छन्ति मूढा अविवेकिनः अन्धेनैव दृष्टिविहीनेनैव नीयमाना विषमे पथि यथा बहवोऽन्धा महान्तमनर्थमृच्छन्ति तद्वत् ॥ ५ ॥

**न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।**
**अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥६॥**

अत एव मूढत्वान्न साम्परायः प्रतिभाति । सम्परेयते इति सम्परायः परलोकस्तत्प्राप्तिप्रयोजनः साधनविशेषः शास्त्रीयः साम्परायः स च बालमविवेकिनं प्रति न प्रतिभाति न प्रकाशते नोपतिष्ठते इत्येतत् । प्रमाद्यन्तं प्रमादं कुर्वन्तं पुत्रपश्वादिप्रयोजनेष्वासक्तमनसं तथा वित्तमोहेन वित्तनिमित्तेनाविवेकेन मूढं तमसाच्छन्नम् । स त्वयमेव लोको योऽयं दृश्यमानः स्त्र्यन्नपानादिविशिष्टो नास्ति परोऽदृष्टो लोक इत्येवं मननशीलो मानी पुनः पुनर्जनित्वा वशं मेऽधीनतामापद्यते मृत्योर्मम जननमरणादिलक्षणदुःखप्रबन्धारूढ एव भवतीत्यर्थः । प्रायेण ह्येवंविध एव लोकः ॥ ६ ॥

**श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ।**
**आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः ॥७॥**

यस्तु श्रेयोर्थी सहस्रेषु कश्चिदेवात्मविद्भवति त्वद्विधो यस्माच्छ्रवणायापि श्रवणार्थं श्रोतुमपि यो न लभ्य आत्मा बहुभिरनेकैः शृण्वन्तोऽपि बहवोऽनेकेऽन्ये यमात्मानं न विद्युर्न विदन्त्यभागिनोऽसंस्कृतात्मानो न विजानीयुः । किंच अस्य वक्ताऽप्याश्चर्योऽद्भुतवदेवानेकेषु कश्चिदेव भवति । तथा श्रुत्वाऽप्यस्यात्मनः कुशलो निपुण एवानेकेषु लब्धा कश्चिदेव भवति । यस्मादाश्चर्यो ज्ञाता कश्चिदेव कुशलानुशिष्टः कुशलेन निपुणेनाचार्येणानुशिष्टः (संशिक्षित इत्यध्याहार्यम् ) सन् ॥ ७ ॥

**न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः ।**
**अनन्यप्रोक्ते गतिरत्र नास्ति अणीयान्ह्यतर्क्यमणुप्रमाणात् ॥८॥**

कस्मात् ? नहि नरेण मनुष्येणावरेण प्रोक्तोऽवरेण हीनेन प्राकृतबुद्धिनेत्येतदुक्त एष आत्मा यं त्वं मां पृच्छसि । न हि सुष्ठु सम्यग्विज्ञेयो विज्ञातुं शक्यो (१) यस्माद्बहुधाऽस्ति नास्ति कर्ताऽकर्ता शुद्धोऽशुद्ध इत्याद्यनेकधा चिन्त्यमानो वादिभिः । कथं पुनः सुविज्ञेय इत्युच्यते—अनन्यप्रोक्तेऽनन्येनापृथग्द-

(१) यस्माद्बहुधेति—शून्यवादिव्यतिरिक्तवादिभिरस्तीति चिन्त्यमानस्तेनास्तीति चिन्त्यमानोऽस्तीति पक्षे साङ्ख्यव्यतिरिक्तैः कर्ताशुद्ध इत्यकर्ता शुद्ध इति वेदान्तिभिश्च स एव ब्रह्माभिन्न इति चिन्त्यमानो यस्मात्तस्माद्विप्रतिपत्तिमत्त्वादनुपदिष्टोऽर्थो न लब्धुं शक्य इति भावः ।

र्शिनाचार्येण प्रतिपाद्यब्रह्मात्मभूतेन प्रोक्ते उक्ते आत्मनि गतिरनेकधास्तिनास्तीत्यादिलक्षणा चिन्ता गतिरत्रास्मिन्नात्मनि नास्ति न विद्यते सर्वविकल्पगतिप्रत्यस्तमितत्वादात्मनः। अथवा स्वात्मभूतेऽनन्यस्मिन्नात्मनि प्रोक्ते नन्यप्रोक्ते गतिरत्रान्यावगतिर्नास्ति ज्ञेयस्यान्यस्याभावात्। ज्ञानस्य ह्येषा परा निष्ठा यदात्मैकत्वविज्ञानम्। अतोऽवगन्तव्याभावान्न गतिरत्रावशिष्यते, संसारगतिर्वात्र नास्त्यनन्ये आत्मनि प्रोक्ते नान्तरीयकत्वात्तद्विज्ञानफलस्य मोक्षस्य। अथवा प्रोच्यमानब्रह्मात्मभूतेनाचार्येण अनन्यतया प्रोक्ते आत्मन्यगतिरनवबोधोऽपरिज्ञानमत्र नास्ति। भवत्येवावगतिस्तद्विषया श्रोतुस्तदनन्योऽहमित्याचार्यस्येवेत्यर्थः। एवं सुविज्ञेय आत्मागमवताचार्येणानन्यतया प्रोक्तः। इतरथा अणीयानणुतरोऽणुप्रमाणादपि सम्पद्यते आत्मा। अतर्क्यमतर्क्यः स्वबुद्ध्यभ्यूहेन केवलेन तर्केण। तर्क्यमाणे अणुपरिमाणे केनचित्स्थापिते आत्मनि ततो अणुतरमन्योऽभ्यूहति, ततोऽप्यन्यो अणुतरं, इति न हि तर्कस्य निष्ठा क्वचिद्विद्यते ॥८॥

**नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ।**
**यां त्वमापः सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥९॥**

अतोऽनन्यप्रोक्ते आत्मन्युत्पन्ना येयमागमप्रतिपाद्यात्ममतिः, नैषा तर्केण(१) स्वबुद्ध्यभ्यूहमात्रेण आपनेया न प्रापणीयेत्यर्थः। नापनेतव्या वा, न हातव्या। तार्किको ह्यनागमज्ञः स्वबुद्धिपरिकल्पितं यत्किञ्चिदेव कल्पयति। अत एव च येयमागमप्रसृता मतिः तार्किकादन्येनैवागमाभिज्ञेनाचार्येणैव प्रोक्ता सती सुज्ञानाय भवति हे प्रेष्ठ प्रियतम। का पुनः सा तर्कागम्या मतिरित्युच्यते। यां त्वं मतिं मद्वरप्रदानेनापः प्राप्तवानसि। सत्या अवितथविषया धृतिर्यस्य तव स त्वं सत्यधृतिः। बतासीत्यनुकम्पयन्नाह मृत्युर्नचिकेतसं वक्ष्यमाणविज्ञानस्तुतये।

---

(१) स्वबुद्ध्यभ्यूहमात्रेणेति—ननु तर्कस्यानुमानरूपत्वेन प्रमाणत्वात्तदुपनिबद्धस्तत्त्वबोधकत्वात् कथं तर्कागम्य आत्मेत्यत आह—स्वबुद्ध्यभ्यूहेनेति। स्वाधीना बुद्धिः स्वबुद्धिः न गुर्वाद्युपदेशेन संस्कृता तयाभ्यूह आरोपरूपेण तर्केणेत्यर्थः। तथा सत्यनुमानस्य मन्तव्य इति श्रुत्या वेदान्तसहायकत्वमुक्तं बाधितं स्यादित्यत आह—केवलेनेति। श्रुत्यसहायेनेत्यर्थः। तथा च श्रुत्यनुकूलतर्कस्य समूलत्वात् प्रामाण्येऽपि केवलस्य नार्थनिश्चायकतेति भावः। केवलेन तर्केणातर्क्येत्यन्वयः।

त्वादृक्त्वत्तुल्यो नोऽस्मभ्यं भूयाद्भवताद्भवत्वन्यः पुत्रः शिष्यो वा प्रष्टा। कीदृक्? यादृक्त्वं हे नचिकेतः प्रष्टा ॥ ९ ॥

**जानाम्यहꣳ शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्।**
**ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्॥१०॥**

पुनरपि तुष्ट आह—जानाम्यहं शेवधिर्निधिः कर्मफललक्षणो निधिरिव प्रार्थ्यते इति। असावनित्यमनित्य इति जानामि। न हि यस्मादनित्यैरध्रुवैर्यन्नित्यं ध्रुवं तत्प्राप्यते परमात्माख्यः शेवधिः। यस्त्वनित्यसुखात्मकः शेवधिः स एव अनित्यैर्द्रव्यैः प्राप्यते हि यतः ततस्तस्मान्मया जानतापि नित्यमनित्यसाधनैः प्राप्यत इति नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः पश्वादिभिः स्वर्गसुखसाधनभूतोऽग्निर्निर्वर्तित इत्यर्थः। तेनाहमधिकारापन्नो नित्यं याम्यं स्थानं स्वर्गाख्यं नित्यं आपेक्षिकं प्राप्तवानस्मि ॥ १० ॥

**कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरनन्त्यमभयस्य पारम्।**
**स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः॥११॥**

त्वं तु कामस्याप्तिं समाप्तिं, अत्रैव हि सर्वे कामाः परिसमाप्ताः, जगतः साध्यात्माधिभूताधिदैवादेः प्रतिष्ठामाश्रयं सर्वात्मकत्वात्, क्रतोः उपासनायाः फलं हैरण्यगर्भपदं अनन्त्यमानन्त्यम्। अभयस्य च पारं परां निष्ठाम्। स्तोमं स्तुत्यं महदणिमाद्यैश्वर्याद्यनेकगुणसंहतं, स्तोमं च तन्महच्च निरतिशयत्वात्स्तोममहत्। उरुगायं विस्तीर्णां गतिम्। प्रतिष्ठां स्थितिमात्मनोऽनुत्तमामपि दृष्ट्वा धृत्या धैर्येण धीरो धीमान्सन्नचिकेतोऽत्यस्राक्षीः परमेवाकाङ्क्षन्नतिसृष्टवानसि सर्वमेतत्संसारभोगजातम्। अहो बतानुत्तमगुणोऽसि ॥ ११ ॥

**तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।**
**अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति॥१२॥**

यं त्वं ज्ञातुमिच्छस्यात्मानं तं दुर्दर्शं दुःखेन दर्शनमस्येति दुर्दर्शोऽतिसूक्ष्मत्वात् तं गूढं गहनं, अनुप्रविष्टं प्राकृतविषयविकारविज्ञानैः प्रच्छन्नमित्येतत्। गुहाहितं गुहायां बुद्धौ स्थितं तत्रोपलभ्यमानत्वात्। गह्वरेष्ठं गह्वरे

विषमेऽनेकानर्थसङ्कटे तिष्ठतीति गह्वरेष्ठम् । यत एवं गूढमनुप्रविष्टो गुहाहितश्चातो गह्वरेष्ठः अतो दुर्दर्शः । तं पुराणं पुरातनमध्यात्मयोगाधिगमेन विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समाधानमध्यात्मयोगस्तस्याधिगमस्तेन मत्वा देवमात्मानं धीरो हर्षशोकावात्मन उत्कर्षापकर्षयोरभावाज्जहाति ॥ १२ ॥

**एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य ।**
**स मोदते मोदनीयं हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये ॥ १३ ॥**

किञ्च, एतदात्मतत्त्वं यदहं वक्ष्यामि तच्छ्रुत्वाचार्यप्रसादात्सम्यगात्मभावेन परिगृह्योपादाय मर्त्यो मरणधर्मा धर्मादनपेतं धर्म्यं प्रवृह्योद्यम्य पृथक्कृत्य शरीरादेरणुं सूक्ष्ममेतमात्मानमाप्य प्राप्य स मर्त्यो विद्वान्मोदते मोदनीयं हि हर्षणीयमात्मानं लब्ध्वा । तदेतदेवंविधं ब्रह्म सद्म भवनं नचिकेतसं त्वां प्रत्यपावृतद्वारं विवृतमभिमुखीभूतं मन्ये, मोक्षार्हं त्वां मन्य इत्यभिप्रायः ॥ १३ ॥

**अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।**
**अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥ १४ ॥**

एतच्छ्रुत्वा नचिकेताः पुनराह— यद्यहं योग्यः, प्रसन्नश्चासि भगवन्मां प्रति, अन्यत्र धर्माच्छास्त्रीयाद्धर्मानुष्ठानात्तत्फलात्तत्कारकेभ्यश्च पृथग्भूतमित्यर्थः । तथान्यत्राधर्माद्विहिताकरणरूपात्पापात्, तथान्यत्रास्मात्कृताकृतात् । कृतं कार्यमकृतं कारणमस्मादन्यत्र । किञ्चान्यत्र भूताच्चातिक्रान्तात्कालाद्भव्याच्च भविष्यतश्च तथा वर्तमानात् । कालत्रयेण यन्न परिच्छिद्यत इत्यर्थः । यदीदृशं वस्तु सर्वव्यवहारगोचरातीतं पश्यसि जानासि तद्वद मह्यम् ॥ १४ ॥

**सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् १५**

इत्येवं पृष्टवते मृत्युरुवाच पृष्टं वस्तु विशेषणान्तरं च विवक्षन्—सर्वे वेदा यत्पदं पदनीयं गमनीयमविभागेनाविरोधेनामनन्ति प्रतिपादयन्ति, तपांसि सर्वाणि च यद्वदन्ति यत्प्राप्त्यर्थानीत्यर्थः । यदिच्छन्तो ब्रह्मचर्यं गुरुकुलवासलक्षणमन्यद्वा ब्रह्मप्राप्त्यर्थं चरन्ति, तत्ते तुभ्यं पदं यज्ज्ञातुमिच्छसि संग्रहेण

सङ्क्षेपतो ब्रवीमि, ॐ इत्येतत् । तदेतत्पदं यत् बुभुत्सितं त्वया यदेतदोमित्योंशब्दवाच्यमोंशब्दप्रतीकं च ॥ १५ ॥

**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥**

अत एतद्ध्येवाक्षरं ब्रह्मापरं एतद्ध्येवाक्षरं परं च । तयोर्हि प्रतीकमेतदक्षरम् । एतद्ध्येवाक्षरं ज्ञात्वोपास्य ब्रह्मेति, यो यदिच्छति परमपरं वा तस्य तद्भवति । परं चेज्ज्ञातव्यं अपरं चेत्प्राप्तव्यम् ॥ १६ ॥

**एतदालम्बनꣳश्रेष्ठमेतदालम्बनं परम् ।**
**एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥**

यत एवमत एव एतदालम्बनं ब्रह्मप्राप्त्यालम्बनानां श्रेष्ठं प्रशस्यतमम् । एतदालम्बनं परमपरं च परापरब्रह्मविषयत्वात् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते । परस्मिन्ब्रह्मण्यपरस्मिंश्च ब्रह्मभूतो ब्रह्मवदुपास्यो भवतीत्यर्थः ॥१७॥

'अन्यत्र धर्मात्' [ २. १४ ] इत्यादिना पृष्टस्यात्मनोऽशेषविशेषरहितस्यालम्बनत्वेन प्रतीकत्वेन चोङ्कारो निर्दिष्टः । अपरस्य च ब्रह्मणो मन्दमध्यमप्रतिपत्तॄन्प्रति ॥

अथेदानीं तस्योङ्कारालम्बनस्यात्मनः साक्षात्स्वरूपनिर्दिधारयिषयेदमुच्यते—

**न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥१८॥**

न जायते नोत्पद्यते म्रियते वा न म्रियते चोत्पत्तिमतो वस्तुनोऽनित्यस्यानेका विक्रियास्तासामाद्यन्ते जन्मविनाशलक्षणे विक्रिये इहात्मनि प्रतिषिध्येते प्रथमं सर्वविक्रियाप्रतिषेधार्थं न जायते म्रियते वेति । विपश्चिन्मेधावी, अविपरिलुप्तचैतन्यस्वभावात् । किञ्च नायमात्मा कुतश्चित्कारणान्तराद्बभूव न प्रभूतः । अस्माच्चात्मनो न बभूव कश्चिदर्थान्तरभूतः । अतोऽयमात्माऽजो नित्यः शाश्वतो अपक्षयविवर्जितः । यो ह्यशाश्वतः सोऽपक्षीयते, अयं तु शाश्वतोऽत एव पुराणः पुरापि नव एवेति । यो ह्यवयवोपचयद्वारेणाभिनिर्वर्त्यते स इदानीं नवो

यथा अङ्कुरादिर्वृद्धिपरीतस्त्वात्मा पुराणो वृद्धिविवर्जित इत्यर्थः। यत एवमतो न हन्यते न हिंस्यते हन्यमाने शस्त्रादिभिः शरीरे। तत्स्थोऽप्याकाशवदेव ॥ १८ ॥

**हन्ता चेन्मन्यते हन्तुꣳहतश्चेन्मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायꣳहन्ति न हन्यते ॥ १९ ॥**

एवम्भूतमप्यात्मानं शरीरमात्रात्मदृष्टिर्हन्ता चेद्यदि मन्यते चिन्तयति हन्तुं हनिष्याम्येनमिति योऽप्यन्यो हतः सोऽपि चेन्मन्यते हतमात्मानं हतोऽहमिति उभावपि तौ न विजानीतः स्वमात्मानं, यतो नायं हन्ति अविक्रियत्वादात्मनः तथा न हन्यते आकाशवदविक्रियत्वादेव। अतोऽनात्मज्ञविषय एव धर्माधर्मादिलक्षणः संसारो न आत्मज्ञस्य श्रुतिप्रामाण्या(१)न्न्यायाच्च धर्माधर्माद्यनुपपत्तेः॥ १९ ॥

**अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् ।**
**तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमात्मनः २०**

कथं पुनरात्मानं जानातीत्युच्यते–अणोः सूक्ष्मादणीयाञ्श्यामाकादेरणुतरः। महतो महत्परिमाणान्महीयान्महत्तरः पृथिव्यादेः। अणु महद्वा यदस्ति लोके वस्तु तत्तेनैवात्मना नित्येनात्मवत्सम्भवति। तदात्मना विनिर्मुक्तमसत्सम्पद्यते। तस्मादसावेवात्माणोरणीयान्महतो महीयान्सर्वनामरूपवस्तूपाधिकत्वात्। स चात्मास्य जन्तोर्ब्रह्मादिस्तम्बपर्यन्तस्य प्राणिजातस्य गुहायां हृदये निहित आत्मभूतः स्थित इत्यर्थः। तमात्मानं दर्शनश्रवणमननविज्ञानलिङ्गमक्रतुरकामः, दृष्टादृष्टबाह्यविषयोपरतबुद्धिरित्यर्थः। यदा चैवं तदा मन आदीनि करणानि धातवः शरीरस्य धारणात्प्रसीदन्तीत्येषां धातूनां प्रसादादात्मनो महिमानं कर्मनिमित्तवृद्धिक्षयरहितं पश्यत्ययमहमस्मीति, साक्षाद्विजानाति। ततो वीतशोको भवति ॥ २० ॥

अन्यथा दुर्विज्ञेयोऽयमात्मा कामिभिः प्राकृतपुरुषैः, यस्मात्

**आसीनो दूरं व्रजति शयानो याति सर्वतः ।**
**कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥**

(१) न्यायश्चेत्थं विवेकी सर्वदा मुक्तः कुर्वतो नास्ति कर्तृता ॥ अलेपवादमाश्रित्य श्रीकृष्णजनकौ यथेति ।

आसीनोऽवस्थितोऽचल एव सन्दूरं व्रजति शयानो याति सर्वतः, एवं असावात्मा देवो मदामद समदोऽमदश्च सहर्षोऽहर्षश्च विरुद्धधर्मवानतोऽशक्यत्वाज्ज्ञातुं कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति । अस्मदादेरेव सूक्ष्मबुद्धेः पण्डितस्य विज्ञेयोऽयमात्मा स्थितिगतिनित्यानित्यादिविरुद्धानेकधर्मोपाधित्वाद्विरुद्धधर्मवान् विश्वरूप इव चिन्तामणिवत्कस्यचिदवभासते । अतो दुर्विज्ञेयत्वं दर्शयति कस्तं मदन्यो ज्ञातुमर्हतीति । करणानामुपशमः शयनं करणजनितस्यैकदेशविज्ञानस्योपशमः शयानस्य भवति । यदा चैवं केवलसामान्यविज्ञानत्वात्सर्वतो यातीव यदा विशेषविज्ञानस्थः स्वेन रूपेण स्थित एव सन्मन आदिगतिषु तदुपाधिकत्वात् दूरं व्रजतीव । स चेहैव वर्तते ॥ २१ ॥

**अशरीरꣳशरीरेष्वनवस्थेष्ववस्थितम् ।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २२ ॥**

तद्विज्ञानाच्च शोकात्यय इत्यपि दर्शयति—अशरीरः स्वेन रूपेणाकाशकल्प आत्मा तमशरीरं शरीरेषु देवपितृमनुष्यादिशरीरेष्वनवस्थेष्ववस्थितिरहितेषु अनित्येष्ववस्थितं नित्यमविकृतमित्येतत् । महान्तं, महत्त्वस्यापेक्षिकत्वशङ्कायामाह विभुं व्यापिनमात्मानम् । आत्मग्रहणं स्वतोऽनन्यत्वप्रदर्शनार्थम् । आत्मशब्दः प्रत्यगात्मविषय एव मुख्यस्तमीदृशमात्मानं मत्वायमहमिति, धीरो धीमान्न शोचति । न ह्येवंविधस्यात्मविदः शोकोपपत्तिः ॥ २२ ॥

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूꣳस्वाम् २३**

यद्यपि दुर्विज्ञेयोऽयमात्मा तथाप्युपायेन सुविज्ञेय एवेत्याह नायमात्मा प्रवचनेनानेकवेदस्वीकरणेन लभ्यो ज्ञेयो, नापि मेधया ग्रन्थार्थधारणशक्त्या, न बहुना श्रुतेन केवलेन । केन तर्हि लभ्य इत्युच्यते—यमेव स्वात्मानमेष साधको वृणुते प्रार्थयते तेनैवात्मना वरित्रा स्वयमात्मा लभ्यो ज्ञायते इत्येतत् । निष्कामश्चात्मानमेव प्रार्थयते, आत्मनैवात्मा लभ्यत इत्यर्थः । कथं लभ्यत इत्युच्यते—तस्यात्मकामस्यैष आत्मा विवृणुते प्रकाशयति पारमार्थिकीं तनूं स्वां स्वकीयां स्वयाथात्म्यमित्यर्थः ॥ २३ ॥

**नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।**
**नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥**

किञ्चान्यत् । न दुश्चरितात्प्रतिषिद्धात् श्रुतिस्मृत्यविहितात्पापकर्मणोऽविरतोऽनुपरतः । नापीन्द्रियलौल्यादशान्तोऽनुपरतः । नाप्यसमाहितोऽनेकाग्रमना विक्षिप्तचित्तः समाहितचित्तोऽपि सन्समाधानफलार्थित्वान्नाप्यशान्तमानसो व्यापृतचित्तो वा । प्रज्ञानेन ब्रह्मविज्ञानेनैनं प्रकृतमात्मानमाप्नुयात् । यस्तु दुश्चरिताद्विरत इन्द्रियलौल्याच्च, समाहितचित्तः समाधानफलादप्युपशान्तमानसश्चाचार्यवान्, प्रज्ञानेन यथोक्तमात्मानं प्राप्नोतीत्यर्थः ॥ २४ ॥

**यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।**
**मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥**

**इति काठकोपनिषदि द्वितीया वल्ली ॥ २ ॥**

यस्त्वेवंभूतो यस्य ब्रह्म च क्षत्रं च ब्रह्मक्षत्रे सर्वधर्मविधारके अपि सर्वत्राणभूते उभे ओदनोऽशनं भवतः स्याताम् । सर्वहरोऽपि मृत्युर्यस्योपसेचनमिवौदनस्य, अशनत्वेऽप्यपर्याप्तः, तं प्राकृतबुद्धिर्यथोक्तसाधनरहितः सन्क इत्था इत्थमेवं यथोक्तसाधनवानिवेत्यर्थः । वेद विजानाति यत्र स आत्मेति ॥ २५ ॥

इति कठवल्ल्यां द्वितीयवल्लीभाष्यम् ॥ २ ॥

---

**अथ तृतीया वल्ली ।**

**ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।**
**छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १ ॥**

ऋतं पिबन्तावित्यस्या वल्ल्याः सम्बन्धः । विद्याविद्ये नाना विरुद्धफले इत्युपन्यस्ते, न तु सफले ते यथावन्निर्णीते । तन्निर्णयार्था रथरूपककल्पना, तथा च प्रतिपत्तिसौकर्यम् । एवं च प्राप्तृप्राप्यगन्तृगन्तव्यविवेकार्थं रथरूपकद्वारा द्वावात्मानावुपन्यस्येते--ऋतं सत्यमवश्यंभावित्वात्कर्मफलं पिबन्तौ । एकस्तत्र

कर्मफलं पिबति भुङ्क्ते नेतरस्तथापि पातृसम्बन्धात्पिबन्ताविव्युच्यते च्छत्रिन्यायेन। सुकृतस्य स्वयङ्कृतस्य कर्मण ऋतमिति पूर्वेण सम्बन्धः। लोकेऽस्मिञ्शरीरे। गुहां गुहायां बुद्धौ प्रविष्टौ। परमे बाह्यपुरुषाकाशसंस्थानापेक्षया परमम्। परार्धे परस्य ब्रह्मणोऽर्धं स्थानं परार्धं हार्दाकाशम्। तस्मिन्हि परं ब्रह्मोपलभ्यते। ततस्तस्मिन्परमे परार्धे हार्दाकाशे प्रविष्टावित्यर्थः। तौ च च्छायातपाविव विलक्षणौ संसारित्वासंसारित्वेन ब्रह्मविदो वदन्ति कथयन्ति। न केवलमकर्मिण एव वदन्ति। (१)पञ्चाग्नयो गृहस्थाः। ये च त्रिणाचिकेताः, त्रिःकृत्वो नाचिकेतोऽग्निः चितो यैस्ते त्रिणाचिकेताः॥ १॥

**यः सेतुरीजानामक्षरं ब्रह्म यत्परम्।**
**अभयं तितीर्षतां पारं नाचिकेतꣳ शकेमहि॥ २॥**

यः सेतुः सेतुरिव सेतुरीजानानां यजमानानां कर्मिणां दुःखसन्तरणार्थत्वात्। नाचिकेतं नाचिकेतोऽग्निस्तं, वयं ज्ञातुं चेतुं च शकेमहि शक्नुवन्तः। किञ्च यच्चाभयं भयशून्यं संसारस्य पारं तितीर्षतां तर्तुमिच्छतां ब्रह्मविदां यत्परमाश्रयमक्षरमात्माख्यं ब्रह्म, तच्च ज्ञातुं शकेमहि। परापरे ब्रह्मणी कर्मिब्रह्मविदाश्रये वेदितव्ये इति वाक्यार्थः। एतयोरेव ह्युपन्यासः कृतः 'ऋतं पिबन्तौ' [ ३. १ ] इति॥ २॥

**आत्मानꣳरथिनं विद्धि शरीरꣳरथमेव तु।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥ ३॥**

तत्र यः उपाधिकृतः संसारी विद्याविद्ययोरधिकृतो मोक्षगमनाय संसारगमनाय च, तस्य तदुभयगमने साधनो रथः कल्प्यते। तत्र आत्मानमृतपं संसारिणं रथिनं रथस्वामिनं विद्धि जानीहि। शरीरं रथमेव तु रथबद्धहयस्थानीयैरिन्द्रियैराकृष्यमाणत्वाच्छरीरस्य। बुद्धिं तु अध्यवसायलक्षणां सारथिं विद्धि, बुद्धिनेतृप्रधानत्वाच्छरीरस्य सारथिनेतृप्रधान इव रथः। सर्वं हि देहगतं कार्यं बुद्धि-

(१) पञ्चाग्नयो गृहस्था इति—गार्हपत्यो दक्षिणाग्निराहवनीयः सभ्य आवसथ्यश्चैते पञ्चाग्नयो येषां ते पञ्चाग्नयः, द्युपर्जन्यपृथिवीपुरुषयोषित्सु येऽग्निदृष्टिं कुर्वते ते वा पञ्चाग्नयः। पञ्चाग्नयस्त्रिणाचिकेतलक्षणा वदन्तीति सम्बन्धः।

कर्तव्यमेव प्रायेण । मनः संकल्पविकल्पादिलक्षणं प्रग्रहं रशनां विद्धि । मनसा हि प्रगृहीतानि श्रोत्रादीनि करणानि प्रवर्तन्ते रशनयेवाश्वाः ॥ ३ ॥

**इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥**

इन्द्रियाणि चक्षुरादीनि हयानाहू रथकल्पनाकुशलाः, शरीररथाकर्षणसामान्यात् । तेष्वेवेन्द्रियेषु हयत्वेन परिकल्पितेषु गोचरान्मार्गान् रूपादीन्विषयान् विद्धि । आत्मेन्द्रियमनोयुक्तं शरीरेन्द्रियमनोभिः सहितं संयुक्तमात्मानं भोक्तेति संसारीत्याहुर्मनीषिणो विवेकिनः । न हि केवलस्यात्मनो भोक्तृत्वमस्ति, बुद्ध्याद्युपाधिकृतमेव तस्य भोक्तृत्वम् । तथा च श्रुत्यन्तरं केवलस्याभोक्तृत्वमेव दर्शयति 'ध्यायतीव लेलायतीव' इत्यादि । एवं च सति वक्ष्यमाणरथकल्पनया वैष्णवस्य पदस्यात्मतया प्रतिपत्तिरुपपद्यते, नान्यथा स्वभावानतिक्रमात् ॥ ४ ॥

**यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा ।**
**तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥**

तत्रैवं सति यस्तु अविज्ञानवान् यस्य बुद्ध्याख्यः सारथिरविज्ञानोऽनिपुणोऽविवेकी प्रवृत्तौ च निवृत्तौ च भवति, यथेतरो रथचर्यायामयुक्तेनाप्रगृहीतेनासमाहितेन मनसा प्रग्रहस्थानीयेन सदा युक्तो भवति, तस्याकुशलबुद्धिसारथेरिन्द्रियाण्यश्वस्थानीयान्यवश्यान्यशक्यनिवारणानि दुष्टाश्वा अदान्ताश्वा इवेतरसारथेर्भवन्ति ॥ ५ ॥

**यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा ।**
**तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥**

यस्तु पुनः पूर्वोक्तविपरीतसारथिर्भवति विज्ञानवान्प्रगृहीतमनाः समाहितचित्तः सदा, तस्याश्वस्थानीयानीन्द्रियाणि प्रवर्तयितुं निवर्तयितुं वा शक्यानि वश्यानि दान्ताः सदश्वा इवेतरसारथेः ॥ ६ ॥

**यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः ।**
**न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ ७ ॥**

तस्य पूर्वोक्तस्याविज्ञानवतः इदं फलमाह--यस्त्वविज्ञानवान्भवति। अमन-स्कोऽप्रगृहीतमनस्कः स तत एवाशुचिः सदैव। न स रथी तत्पूर्वोक्तमक्षरं यत्परं पदमाप्नोति तेन सारथिना। न केवलं तन्नाप्नोति. संसारं च जन्ममरणलक्षण-मधिगच्छति ॥ ७ ॥

**यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः।**
**स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥**

यस्तु द्वितीयो विज्ञानवान्विज्ञानवत्सारथ्युपेतो रथी विद्वानित्येतत्। युक्त-मनाः समनस्कः स तत एव सदा शुचिः, स तु तत्पदमाप्नोति यस्मादाप्तात्पदाद-प्रच्युतः सन्भूयः पुनर्न जायते संसारे ॥ ८ ॥

**विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः।**
**सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ९ ॥**

किं तत्पदमित्याह विज्ञानसारथिर्यस्तु यो विवेकबुद्धिसारथिः पूर्वोक्तो मनःप्रग्रहवान्प्रगृहीतमनाः समाहितचित्तः सञ्शुचिर्नरो विद्वान्सोऽध्वनः संसार-गतेः पारं परमेव अधिगन्तव्यमित्येतत् आप्नोति मुच्यते सर्वसंसारबन्धनैः। तद्विष्णोर्व्यापनशीलस्य ब्रह्मणः परमात्मनो (१)वासुदेवाख्यस्य परमं प्रकृष्टं पदं स्थानं, सतत्त्वं इत्येतद्यदसौ आप्नोति विद्वान् ॥ ९ ॥

अधुना यत्पदं गन्तव्यं तस्य इन्द्रियाणि स्थूलान्यारभ्य सूक्ष्मतारतम्यक्रमेण प्रत्यगात्मतया अधिगमः कर्तव्य इत्येवमर्थमिदमारभ्यते—

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ १० ॥**

स्थूलानि तावदिन्द्रियाणि, तानि यैरर्थैरात्मप्रकाशनायारब्धानि तेभ्य इन्द्रि-येभ्य स्वकार्येभ्यस्ते परा ह्यर्थाः सूक्ष्मा महान्तश्च प्रत्यगात्मभूताश्च। तेभ्योऽप्यर्थे-भ्यश्च परं सूक्ष्मतरं महत्प्रत्यगात्मभूतं च मनः। मनःशब्दवाच्यं मनस आरम्भकं

---

(१) वासुदेवाख्यस्येति—वासयति भूतानि स्वस्मिन् इति वासुः सचासौ देवश्च दीव्यते इति स्वप्रकाशः स वासुदेव इत्यर्थः।

दिदोषबीजापेक्षया सृष्टास्तैमिरिकदृष्टिसृष्टा इव द्विचन्द्रमशकमक्षिकाद्याः स्वप्नदृक्सृष्टा इव च सर्वपदार्थाः पुनस्तस्मिन्नेव पुरुषे प्रलीयन्ते हित्वा नामरूपादिविभागम् ॥ ४ ॥

**स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति तदेष श्लोकः ॥ ५ ॥**

कथं ? स दृष्टान्तः । यथा लोके इमा नद्यः स्यन्दमानाः स्रवन्त्यः समुद्रायणाः, समुद्रोऽयनं गतिरात्मभावो यासां ताः समुद्रायणाः, समुद्रं प्राप्योपगम्यास्तं अदर्शनं नामरूपतिरस्कारं गच्छन्ति । तासां चास्तङ्गतानां भिद्येते विनश्येते नामरूपे गङ्गायमुनेत्यादिलक्षणे । तदभेदेन समुद्र इत्येवं प्रोच्यते तद्वस्तूदकलक्षणं, एवं यथायं दृष्टान्तः, उक्तलक्षणस्य प्रकृतस्यास्य पुरुषस्य परिद्रष्टुः परि समन्तात् द्रष्टुर्दर्शनस्य कर्तुः स्वरूपभूतस्य । यथार्कः स्वात्मप्रकाशस्य कर्ता सर्वतस्तद्वदिमाः षोडश प्राणाद्या उक्ताः कलाः पुरुषायणा, नदीनामिव समुद्रः पुरुषोऽयनमात्मभावगमनं यासां कलानां ताः पुरुषायणाः, पुरुषं प्राप्य पुरुषात्मभावमुपगम्य तथैवास्तं गच्छन्ति । भिद्येते चासां नामरूपे कलानां प्राणाद्याख्या रूपं च यथास्वम् । भेदे च नामरूपयोर्यदनष्टं तत्त्वं तत् पुरुष इत्येवं प्रोच्यते ब्रह्मविद्भिः । य एवं विद्वान्गुरुणा प्रदर्शितकलाप्रलयमार्गः स एष विद्यया प्रविलापितासु अविद्याकामकर्मजनितासु प्राणादिकलास्वकलो अविद्याकृतकलानिमित्तो हि मृत्युः, तदपगमेऽकलत्वादेवामृतो भवति । तदेतस्मिन्नर्थे एष श्लोकः ॥ ५ ॥

**अरा इव रथनाभौ कला यस्मिन्प्रतिष्ठिताः । तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥ ६ ॥**

अरा इव रथचक्रपरिवारा इव रथनाभौ रथचक्रस्य नाभौ यथा प्रवेशिताः तदाश्रया भवन्ति यथा तथेत्यर्थः । कलाः प्राणाद्या यस्मिन्पुरुषे प्रतिष्ठिता उत्पत्तिस्थितिलयकालेषु, तं पुरुषं कलानामात्मभूतं वेद्यं वेदनीयं पूर्णत्वात्पुरुषं

पुरि शयनाद्वा वेद जानाति। यथा हे शिष्या मा वो युष्मान्मृत्युः परिव्यथा मा परिव्यथयतु। न चेद्विज्ञायेत पुरुषो मृत्युनिमित्तां व्यथामापन्ना दुःखिन एव यूयं स्थ। अतस्तन्मा भूत युष्माकमित्यभिप्रायः ॥ ६ ॥

**तान्होवाचैतावदेवाहमेतत्परं ब्रह्म वेद । नातः परमस्तीति ७**

तानेवमनुशिष्य शिष्यांस्तान्होवाच पिप्पलादः किल—एतावदेव वेद्यं परं ब्रह्म वेद विजानाम्यहमेतत् । नातोऽस्मात्परमस्ति प्रकृष्टतरं वेदितव्यम् । इत्येवमुक्तवान् शिष्याणां अविदितशेषास्तित्वाशङ्कानिवृत्तये कृतार्थबुद्धिजननार्थं च ॥

**ते तमर्चयन्तस्त्वं हि नः पिता ? योऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥ इति षष्ठः प्रश्नः ॥**

ततस्ते शिष्या गुरुणानुशिष्टास्तं गुरुं कृतार्थाः सन्तो विद्यानिष्क्रयमपश्यन्तः किं कृतवन्त इत्युच्यते—अर्चयन्तः पूजयन्तः पादयोः पुष्पाञ्जलिप्रकिरणेन प्रणिपातेन च शिरसा । किमूचुरित्याह—त्वं हि नोऽस्माकं पिता ब्रह्मशरीरस्य विद्यया जनयितृत्वान्नित्यस्याजरामरणस्याभयस्य । यस्त्वमेवास्माकमविद्यायाः विपरीतज्ञानात् जन्मजरामरणरोगदुःखादिग्राहादपारादविद्यामहोदधेर्विद्याप्लवेन परं अपुनरावृत्तिलक्षणं मोक्षाख्यं महोदधेरिव पारं तारयस्यस्मानित्यतः पितृत्वं तवास्मान्प्रत्युपपन्नमितरस्मात् । इतरोऽपि हि पिता शरीरमात्रं जनयति तथापि स पूज्यतमो लोके । किमु वक्तव्यमात्यन्तिकाभयदातुरित्यभिप्रायः । नमः परमऋषिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यः । नमः परमऋषिभ्य इति द्विर्वचनमादरार्थम् ॥ ७–८ ॥ इति षष्ठः प्रश्नः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीशङ्करभगवतः कृतौ प्रश्नोपनिषद्भाष्यं समाप्तम् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः । व्यशेम देवहितं यदायुः ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

इति अथर्ववेदीया प्रश्नोपनिषत्समाप्ता ॥

---

॥ ॐ ॥

# श्रीमच्छङ्कराचार्यविरचितभाष्ययुता

# मुण्डकोपनिषत् ।

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

## प्रथममुण्डके प्रथमः खण्डः ।

ॐ 'ब्रह्मा देवानां' इत्याद्याथर्वणोपनिषत् । अस्याश्च विद्यासम्प्रदायकर्तृपारम्पर्यलक्षणं सम्बन्धं आदावेवाह स्वयमेव स्तुत्यर्थम्—एवं हि महद्भिः परमपुरुषार्थसाधनत्वेन गुरुणा आयासेन लब्धा विद्येति । श्रोतृबुद्धिप्ररोचनाय विद्यां महीकरोति । स्तुत्या प्ररोचितायां हि विद्यायां सादराः प्रवर्तेरन्निति । प्रयोजनेन तु विद्यायाः साध्यसाधनलक्षणं सम्बन्धं उत्तरत्र वक्ष्यति—'भिद्यते हृदयग्रन्थिः' इत्यादिना । अत्र च अपरशब्दवाच्याया ऋग्वेदादिलक्षणाया विधिप्रतिषेधमात्रपराया विद्याया संसारकारणाविद्यादिदोषनिवर्तकत्वं नास्तीति स्वयमेवोक्त्वा परापरेति विद्याभेदकरणपूर्वकं 'अविद्यायामन्तरे वर्तमाना' इत्यादिना । तथा परप्राप्तिसाधनं सर्वसाधनसाध्यविषयवैराग्यपूर्वकं गुरुप्रसादलभ्यां ब्रह्मविद्यामाह—'परीक्ष्य लोकान्' इत्यादिना । प्रयोजनं चासकृद्ब्रवीति 'ब्रह्म वेद ब्रह्मैव भवति' इति । 'परामृताः परिमुच्यन्ति सर्वे' इति च । ज्ञानमात्रे यद्यपि सर्वाश्रमिणामधिकारः तथापि सन्न्यासनिष्ठैव ब्रह्मविद्या मोक्षसाधनं न कर्मसहितेति 'भैक्ष्यचर्यां चरन्तः' 'सन्न्यासयोगात्' इति च ब्रुवन्दर्शयति । विद्याकर्मविरोधाच्च । नहि ब्रह्मात्मैकत्वदर्शनेन सह कर्म स्वप्नेऽपि सम्पादयितुं शक्यम् ।

विद्यायाः कालविशेषाभावादनियतनिमित्तत्वाच्च कामसङ्कोचानुपपत्तेः । (१) यत्तु गृहस्थेषु ब्रह्मविद्यासम्प्रदायकर्तृत्वादि लिङ्गं न तत्स्थितं न्यायं बाधितुमुत्सहते । नहि विधिशतेनापि तमःप्रकाशयोरेकत्र सद्भावः शक्यते कर्तुं, किमुत लिङ्गैः केवलैरिति । एवं उक्तसम्बन्धप्रयोजनाया उपनिषदोऽल्पाक्षरं ग्रन्थविवरण-मारभ्यते । य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तः, तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्म गमयत्यविद्यादि-संसारकारणं वा अत्यन्तमवसादयति विनाशयतीत्युपनिषत् । उपनिपूर्वस्य सदेरे-वमर्थस्मरणात् ॥

**ॐ ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥**

ब्रह्मा परिवृढो महान्धर्मज्ञानवैराग्यैश्वर्यैः सर्वानन्यानतिशेत इति । देवानां द्योतनवतामिन्द्रादीनां प्रथमो गुणैः प्रधानः सन्प्रथमोऽग्रे वा सम्बभूवाभिव्यक्तः सम्यक्स्वातन्त्र्येणेत्यभिप्रायः । न तथा यथा धर्माधर्मवशात्संसारिणोऽन्ये जायन्ते । "योऽसावतीन्द्रियोऽग्राह्यः" इत्यादिस्मृतेः । विश्वस्य सर्वस्य जगतः कर्तोत्पादयिता । भुवनस्योत्पन्नस्य गोप्ता पालयितेति विशेषणं ब्रह्मणो विद्यास्तु-तये । स एवं प्रख्यातमहत्त्वो ब्रह्मा ब्रह्मविद्यां ब्रह्मणः परमात्मनो विद्यां ब्रह्मविद्यां 'येनाक्षरं पुरुषं वेद सत्यम्' इति विशेषणात् । परमात्मविषया हि सा । ब्रह्मणा वाग्रजेनोक्तेति ब्रह्मविद्या । तां ब्रह्मविद्यां सर्वविद्याप्रतिष्ठां सर्वविद्याभिव्यक्तिहेतुत्वात्सर्वविद्याश्रयामित्यर्थः । सर्वविद्यावेद्यं वा वस्त्वनयैव विज्ञायत इति । 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति श्रुतेः ।

---

(१) यत्तु गृहस्थेष्विति—ननु गृहस्थानामश्वपत्यादीनां ब्रह्मसम्प्रदायकर्तृ-त्वदर्शनाद्गृहस्थाश्रमकर्तव्यता [illegible] इत्यत आह—यत्त्विति—लिङ्गस्य न्यायेन [illegible] समुच्चये न न्यायाभावात् [illegible] विशेष-दर्शनाच्च लिङ्गेन समुच्चयसिद्धिः । [illegible] न गार्हस्थ्यस्याश्रमान्तरा-[illegible] । 'यस्य मे नास्ति सर्वं च [illegible] नास्ति किञ्चन । [illegible] प्रदामाया न मे किञ्चन [illegible] ॥ [illegible] दर्शनात् [illegible] न समुच्चयः स्यात्तत्र च विधिर्न दृश्यत इति भावः ॥

सर्वविद्याप्रतिष्ठामिति च स्तौति विद्याम्। अथर्वाय ज्येष्ठपुत्राय प्राह। ज्येष्ठश्चासौ पुत्रश्चानेकेषु ब्रह्मणः सृष्टिप्रकारेष्वन्यतमस्य सृष्टिप्रकारस्य प्रमुखे पूर्वमथर्वा सृष्ट इति ज्येष्ठः। तस्मै ज्येष्ठपुत्राय प्राह प्रोक्तवान्॥ १॥

**अथर्वणे यां प्रवदेत ब्रह्माऽथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्।**
**स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोऽङ्गिरसे परावराम्॥२॥**

यामेतामथर्वणे प्रवदेतावददूब्रह्मविद्यां ब्रह्मा, तामेव ब्रह्मणः प्राप्तामथर्वा पुरा पूर्वं उवाचोक्तवान् अङ्गिरे अङ्गीर्नाम्ने ब्रह्मविद्याम्। स चाङ्गीर्भारद्वाजाय भरद्वाजगोत्राय सत्यवहाय सत्यवहनाम्ने प्राह प्रोक्तवान्। भारद्वाजोऽङ्गिरसे स्वशिष्याय पुत्राय वा परावरां परस्मात्परस्मादवरेण प्राप्तेति परावरा परावर-सर्वविद्याविषयव्याप्तेर्वा, तां परावरामङ्गिरसे प्राहेत्यनुषङ्गः॥ २॥

**शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ॥**
**कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति॥ ३॥**

शौनकः शुनकस्यापत्यं महाशालो महागृहस्थः अङ्गिरसं भारद्वाजशिष्यमाचार्यं विधिवद्यथा(१)शास्त्रमित्येतत्। उपसन्नः उपगतः सन्पप्रच्छ पृष्टवान्। शौनकाङ्गिरसोः सम्बन्धादर्वाग्विधिवद्विशेषणाभावात् उपसदनविधेः पूर्वेषामनियम इति गम्यते। मर्यादाकरणार्थं, मध्यदीपिकान्यायार्थं वा विशेषणम्। अस्मदादिष्वपि उपसदनविधेरिष्टत्वात्। किमित्याह—कस्मिन्नु भगवो विज्ञाते, नु इति वितर्के, भगवो हे भगवन्, सर्वं यदिदं विज्ञेयं विज्ञातं विशेषेण ज्ञातमवगतं भवतीति 'एकस्मिञ्ज्ञाते सर्वविद्भवति' इति शिष्टप्रवादं श्रुतवाञ्शौनकः तद्विशेषं विज्ञातुकामः सन्कस्मिन्निति वितर्कयन्पप्रच्छ। अथवा, लोकसामान्यदृष्ट्या ज्ञात्वैव पप्रच्छ। सन्ति लोके सुवर्णादिशकलभेदाः सुवर्णत्वाद्येकत्वविज्ञानेन विज्ञायमाना लौकिकैः। तथा किन्न्वस्ति सर्वस्य जगद्भेदस्यैकं कारणं यदेकस्मिन्विज्ञाते सर्वं विज्ञातं भवतीति। नन्वविदिते हि कस्मिन्निति प्रश्नोऽनुपपन्नः। किमस्ति तदिति तदा प्रश्नो युक्तः। सिद्धे ह्यस्तित्वे कस्मिन्निति स्यात्। यथा कस्मिन्निधेयमिति। न। अक्षरबाहुल्यात्

(१) रुपिष्ट पाण्यादिधर्मेणेति।

आयासभीरुत्वात्प्रश्नः सम्भवत्येव—किं स्विदस्ति तद्यस्मिन्नेकस्मिन्विज्ञाते सर्व-वित्स्यादिति ॥ ३ ॥

**तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्म-विदो वदन्ति परा चैवापरा च ॥ ४ ॥**

तस्मै शौनकाय अङ्गिरा ह किलोवाच । किमित्युच्यते—द्वे विद्ये वेदितव्ये इति । एवं ह स्म किल यद्ब्रह्मविदो वेदार्थाभिज्ञाः परमार्थदर्शिनो वदन्ति । के ते इत्याह—परा च परमात्मविद्या । अपरा च धर्माधर्मसाधन-तत्फलविषया । ननु कस्मिन्विदिते सर्ववित्भवतीति शौनकेन पृष्टं, तस्मिन्वक्तव्येऽपृष्टमाहाङ्गिरा द्वे विद्ये इत्यादि । नैष दोषः । क्रमापेक्षत्वात्प्रतिवचनस्य । अपरा हि विद्या अविद्या सा निराकर्तव्या । तद्विषये हि विदिते न किञ्चित्तत्त्वतो विदितं स्यादिति । निराकृत्य हि पूर्वपक्षं पश्चात्सिद्धान्तो वक्तव्यो भवतीति न्यायात् ॥ ४ ॥

**तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्ष-रमधिगम्यते ॥ ५ ॥**

तत्र का अपरेत्युच्यते । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इत्येते चत्वारो वेदाः । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि षट् । एषाऽपरा विद्या । अथेदानीमियं परा विद्योच्यते, यया तद्वक्ष्यमाणविशेषणमक्षरं अधिगम्यते प्राप्यते । अधिपूर्वस्य गमेः प्रायशः प्राप्त्यर्थत्वात् । न च परप्राप्तेः अवगमार्थस्य च भेदोऽस्ति । अविद्याया अपाय एव हि परप्राप्तिर्नार्थान्तरम् । ननु ऋग्वेदादिबाह्या तर्हि सा कथं परा विद्या स्यान्मोक्षसाधनं च । "या वेद-बाह्याः स्मृतयो याश्च काश्च कुदृष्टयः" इति हि स्मरन्ति । कुदृष्टित्वान्निष्फलत्वाद-नादेया स्यात् । उपनिषदां च ऋग्वेदादिबाह्यत्वं स्यात् । ऋग्वेदादित्वे तु पृथ-क्करणमनर्थकम् । अथ कथं परेति । न । वेद्यविषयविज्ञानस्य विवक्षितत्वात् । उपनिषद्वेद्याक्षरविषयं हि विज्ञानमिह परा विद्येति प्राधान्येन विवक्षितं, नोप-निषच्छब्दराशिः । वेदशब्देन तु सर्वत्र शब्दराशिर्विवक्षितः । शब्दराश्यधिगमेऽपि

[illegible] मनादिलक्षणं वैराग्यं च नाक्षराधिगमः सम्भवतीति पृथक्करणं [illegible] परा विद्येति ॥ ५ ॥

**यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।**
**नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ६**

यथा विधिविषये कर्त्राद्यनेककारकोपसंहारद्वारेण वाक्यार्थज्ञानकालादूर्ध्वं यत्र अनुष्ठेयोऽर्थोऽस्त्यग्निहोत्रादिलक्षणो,न तथेह परविद्याविषये, वाक्यार्थज्ञानसमकाल एव तु पर्यवसितो भवति । केवलशब्दप्रकाशितार्थज्ञानमात्रनिष्ठाव्यतिरिक्ता-भावात् । तस्मादिह परां विद्यां सविशेषणेनाक्षरेण विशिनष्टि —यत्तदद्रेश्यमित्या-दिना । वक्ष्यमाणं बुद्धौ संहृत्य सिद्धवत्परामृश्यते—यत्तदिति । अद्रेश्यमदृश्यं सर्वेषां बुद्धीन्द्रियाणां अगम्यमित्येतत् । दृशेर्बहिःप्रवृत्तस्य पञ्चेन्द्रियद्वारकत्वात् । अग्राह्यं कर्मेन्द्रियाविषयमित्येतत् । अगोत्रं गोत्रमन्वयो मूलमित्यनर्थान्तरम् । अगोत्रमनन्वयमित्यर्थः । न हि तस्य मूलमस्ति येनान्वितं स्यात् । वर्ण्यन्त इति वर्णा द्रव्यधर्माः स्थूलत्वादयः शुक्लत्वादयो वा । अविद्यमाना वर्णा यस्य तदवर्ण-मक्षरम् । अचक्षुःश्रोत्रं, चक्षुश्च श्रोत्रं च नामरूपविषये करणे सर्वजन्तूनां, ते अविद्यमाने यस्य तदचक्षुःश्रोत्रम् । 'यः सर्वज्ञः सर्ववित्' इत्यादिचेतनावत्त्व-विशेषणात्प्राप्तं संसारिणामिव चक्षुःश्रोत्रादिभिः करणैरर्थसाधकत्वं, तदिह अचक्षुः-श्रोत्रमिति वार्यते । 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिदर्शनात् । किञ्च तदपाणिपादं कर्मेन्द्रियरहितमित्येतत् । यत एवमग्राह्यमग्राहकं च अतो नित्यं अविनाशि । विभुं विविधं ब्रह्मादिस्थावरान्तप्राणिभेदैर्भवतीति विभुम् । सर्वगतं व्यापकमाकाशवत्सुसूक्ष्मम् । शब्दादिस्थूलत्वकारणरहितत्वात् । शब्दादयो ह्याकाश-वाय्वादीनामुत्तरोत्तरं स्थूलत्वकारणानि । तदभावात्सुसूक्ष्मम् । किञ्च तदव्ययं उक्तधर्मत्वादेव न व्येतीत्यव्ययम् । न ह्यनङ्गस्य स्वाङ्गापचयलक्षणो व्ययः सम्भवति शरीरस्येव । नापि कोशापचयलक्षणो व्ययः सम्भवति राज्ञ इव । नापि गुणद्वारको व्ययः सम्भवत्यगुणत्वात्सर्वात्मकत्वाच्च । यदेवंलक्षणं भूतयोनिं भूतानां कारणं पृथिवीव स्थावरजङ्गमानां परिपश्यन्ति सर्वत आत्मभूतं सर्वस्याक्षरं पश्यन्ति धीरा धीमन्तो विवेकिनः । ईदृशमक्षरं यया विद्ययाऽधिगम्यते सा परा विद्येति समुदायार्थः ॥ ६ ॥

**यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम् ॥ ७ ॥**

भूतयोनिरक्षरमित्युक्तम् । तत्कथं भूतयोनित्वमित्युच्यते प्रसिद्धदृष्टान्तैः । यथा लोके प्रसिद्धम् । ऊर्णनाभिर्लूताकीटः किञ्चित्कारणान्तरमनपेक्ष्य स्वयमेव सृजते स्वशरीराव्यतिरिक्तानेव तन्तून्बहिः प्रसारयति, पुनस्तानेव गृह्णते च गृह्णाति स्वात्मभावमेव आपादयति । यथा च पृथिव्यामोषधयो व्रीह्यादिस्थावरान्ता इत्यर्थः । स्वात्माव्यतिरिक्ता एव प्रभवन्ति । यथा च सतो विद्यमानाज्जीवतः पुरुषात्केशलोमानि केशाश्च लोमानि च सम्भवन्ति विलक्षणानि । यथैते दृष्टान्ताः तथा विलक्षणं सलक्षणं च निमित्तान्तरानपेक्षाद्यथोक्तलक्षणात् अक्षरात्सम्भवति, समुत्पद्यते इह संसारमण्डले विश्वं समस्तं जगत् । अनेकदृष्टान्तोपादानं तु सुखावबोधनार्थम् ॥ ७ ॥

यद्ब्रह्मण उत्पद्यमानं विश्वं तदनेन क्रमेणोत्पद्यते न युगपद्बदरमुष्टिप्रक्षेपवदिति । क्रमनियमविवक्षार्थोऽयं मन्त्र आरभ्यते—

**तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।**
**अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥८॥**

तपसा ज्ञानेन उत्पत्तिविधिज्ञतया भूतयोन्यक्षरं ब्रह्म चीयत उपचीयते उत्पादयिषदिदं जगदङ्कुरमिव बीजमुच्छूनतां गच्छति पुत्रमिव पिता हर्षेण । एवं सर्वज्ञतया सृष्टिस्थितिसंहारशक्तिविज्ञानवत्तयोपचितात्ततो ब्रह्मणोऽन्नमद्यते भुज्यत इत्यन्नमव्याकृतं साधारणं कारणं संसारिणां व्याचिकीर्षितावस्थारूपेण अभिजायते उत्पद्यते । ततश्च अव्याकृताद्व्याचिकीर्षितावस्थातोऽन्नात्प्राणो हिरण्यगर्भो ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठितो जगत्साधारणो अविद्याकामकर्मभूतसमुदायबीजाङ्कुरो जगदात्माऽभिजायत इत्यनुषङ्गः । तस्माच्च प्राणान्मनो मनआख्यं सङ्कल्पविकल्पसंशयनिर्णयाद्यात्मकमभिजायते । ततोऽपि सङ्कल्पाद्यात्मकान्मनसः सत्यं सत्याख्यं आकाशादिभूतपञ्चकमभिजायते । तस्मात्सत्याख्यात् भूतपञ्चकादण्डक्रमेण सप्त लोका भूरादयः । तेषु मनुष्यादिप्राणिवर्णाश्रमक्रमेण

कर्माणि। कर्मसु च निमित्तभूतेष्वमृतं कर्मजं फलम्। यावत्कर्माणि कल्पकोटिशतैरपि न विनश्यन्ति, तावत्फलं न विनश्यतीत्यमृतम् ॥ ८ ॥

**यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः।**
**तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥ ९ ॥**

**इति मुण्डकोपनिषदि प्रथममुण्डके प्रथमः खण्डः ॥**

उक्तमेवार्थमुपसञ्जिहीर्षुर्मन्त्रो वक्ष्यमाणार्थमाह—यः उक्तलक्षणोऽक्षराख्यः सर्वज्ञः सामान्येन सर्वं जानातीति सर्वज्ञः। विशेषेण सर्वं वेत्तीति सर्ववित्। यस्य(१) ज्ञानमयं ज्ञानविकारमेव सार्वज्ञ्यलक्षणं तपो अनायासलक्षणं, तस्माद्यथोक्तात्सर्वज्ञादेतदुक्तं कार्यलक्षणं ब्रह्म हिरण्यगर्भाख्यं जायते। किञ्च नामासौ देवदत्तो यज्ञदत्त इत्यादिलक्षणम्। रूपमिदं शुक्लं नीलमित्यादि। अन्नं च व्रीहियवादिलक्षणम्। जायते पूर्वमन्त्रोक्तक्रमेण इत्यविरोधो द्रष्टव्यः ॥ ९ ॥

इति मुण्डकोपनिषद्भाष्ये प्रथममुण्डके प्रथमः खण्डः।

---

## प्रथममुण्डके द्वितीयः खण्डः।

**तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि। तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके ॥१॥**

साङ्गा वेदा अपरा विद्योक्ता 'ऋग्वेदो यजुर्वेद' इत्यादिना। 'यत्तदद्रेश्यं' इत्यादिना 'नाम रूपमन्नं च जायते' इत्यन्तेन ग्रन्थेनोक्तलक्षणमक्षरं यया विद्ययाऽधिगम्यत इति परा विद्या सविशेषणोक्ता। अतः परमनयोर्विद्ययोर्विषयौ विवेक्तव्यौ संसारमोक्षावित्युत्तरो ग्रन्थ आरभ्यते। तत्रापरविद्याविषयः कर्त्रादिसाधनक्रियाफलभेदरूपः संसारोऽनादिरनन्तो दुःखस्वरूपत्वाद्धातव्यः प्रत्येकं शरीरिभिः। सामस्त्येन नदीस्रोतोवदविच्छेदरूपसम्बन्धः तदुपशमलक्षणो मोक्षः परविद्याविषयो अनाद्यनन्तोऽजरोऽमरोऽमृतोऽभयः शुद्धः प्रसन्नः स्वात्मप्रतिष्ठालक्षणः परमानन्दोऽ-

---

(१) यस्यज्ञानमयमिति—सत्त्वप्रधानमायाया ज्ञानाख्यो विकारस्तदुपाधिकं ज्ञानविकारं सृज्यमानसर्वपदार्थाभिज्ञत्वलक्षणं तपो न तु क्लेशरूपं प्रजापतीनामिवेत्यर्थः।

द्वय इति । पूर्वं तावदपरविद्याविषयप्रदर्शनार्थमारम्भः । तद्दर्शने हि तन्निर्वेदोपपत्तिः । तथाच वक्ष्यति—'परीक्ष्य लोकान्कर्मचितान्' इत्यादिना । न ह्यप्रदर्शितं परीक्षोपपद्यत इति तत्प्रदर्शयन्नाह तदेतत्सत्यमवितथम् । किं तत् ? मन्त्रेष्वृग्वेदाद्याख्येषु कर्माण्यग्निहोत्रादीनि मन्त्रैरेव प्रकाशितानि कवयो मेधाविनो वसिष्ठादयो यान्यपश्यन्दृष्टवन्तः । यत्तदेतत्सत्यं एकान्तपुरुषार्थसाधनत्वात्तानि च वेदविहितानि ऋषिदृष्टानि कर्माणि त्रेतायां त्रयीसंयोगलक्षणायां हौत्राध्वर्यवौद्गात्रप्रकारायामधिकरणभूतायां बहुधा बहुप्रकारं सन्ततानि प्रवृत्तानि कर्मिभिः क्रियमाणानि त्रेतायां वा युगे प्रायशः प्रवृत्तानि । अतो यूयं तान्याचरथ निर्वर्तयत नियतं नित्यं सत्यकामा यथाभूतकर्मफलकामाः सन्तः । एष वो युष्माकं पन्था मार्गः सुकृतस्य स्वयं निर्वर्तितस्य कर्मणो लोके फलनिमित्तं लोक्यते दृश्यते भुज्यत इति कर्मफलं लोक उच्यते । तदर्थं तत्प्राप्तये एष मार्ग इत्यर्थः । यान्येतान्यग्निहोत्रादीनि त्रय्यां विहितानि कर्माणि, तान्येष पन्था अवश्यफलप्राप्तिसाधनमित्यर्थः ॥ १ ॥

**यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ॥**
**तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत् ॥ २ ॥**

तत्राग्निहोत्रमेव तावत्प्रथमं प्रदर्शनार्थमुच्यते, सर्वकर्मणां प्राथम्यात् । तत्कथम् ? यदैवेन्धनैरभ्याहितैः सम्यगिद्धे समिद्धे दीप्ते हव्यवाहने लेलायते चलत्यर्चिः, तदा तस्मिन्काले लेलायमाने चलत्यर्चिष्याज्यभागौ आज्यभागयोरन्तरेण मध्ये आवापस्थाने आहुतीः प्रतिपादयेत्प्रक्षिपेद्देवतामुद्दिश्य । अनेकाहप्रयोगापेक्षया आहुतीरिति बहुवचनम् । एष सम्यगाहुतिप्रक्षेपादिलक्षणः कर्ममार्गो लोकप्राप्तये पन्थाः । तस्य च सम्यक्करणं दुष्करम् । विपत्तयस्त्वनेका भवन्ति ॥ २ ॥

**यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान्हिनस्ति ॥ ३ ॥**

कथं ? यस्याग्निहोत्रिणोऽग्निहोत्रं अदर्शं दर्शाख्येन कर्मणा वर्जितम् । अग्निहोत्रिणोऽवश्यकर्तव्यत्वाद्दर्शस्य । अग्निहोत्रसम्बन्ध्यग्निहोत्रविशेषणमिव भवति ।

तदक्रियमाणमित्येतत् । तथाऽपौर्णमासमित्यादिष्वप्यग्निहोत्रविशेषणत्वं द्रष्टव्यम् । अग्निहोत्राङ्गत्वस्याविशिष्टत्वात् । अपौर्णमासं पौर्णमासकर्मवर्जितम् । अचातुर्मास्यं चातुर्मास्यकर्मवर्जितम् । अनाग्रयणं आग्रयणं शरदादिकर्तव्यं तच्च न क्रियते यस्य तत् । तथाऽतिथिवर्जितं च अतिथिपूजनं चाहन्यहनि अक्रियमाणं यस्य । स्वयं सम्यगग्निहोत्रकालेऽहुतम् । अदर्शादिवदवैश्वदेवं वैश्वदेवकर्मवर्जितम् । हूयमानमप्यविधिना हुतं न यथाहुतमित्येतत् । एवं दुःसम्पादितं असम्पादितमग्निहोत्राद्युपलक्षितं कर्म किं करोतीत्युच्यते—आसप्तमान्सप्तमसहितां तस्य कर्तुर्लोकान्हिनस्ति हिनस्तीव आयासमात्रफलत्वात् । सम्यक्क्रियमाणेषु हि कर्मसु कर्मपरिणामानुरूपेण भूरादयः सत्यान्ताः सप्त लोकाः फलं प्राप्यन्ते । ते लोका एवम्भूतेनाग्निहोत्रादिकर्मणा त्वप्राप्यत्वाद्धिंसन्त इव आयासमात्रं त्वव्यभिचारीत्यतो हिनस्तीत्युच्यते । पिण्डदानाद्यनुग्रहेण वा सम्बध्यमानाः पितृपितामहप्रपितामहाः पुत्रपौत्रप्रपौत्राः स्वात्मोपकाराः सप्त लोका उक्तप्रकारेणाग्निहोत्रादिना न भवन्तीति हिंस्यन्त इत्युच्यते ॥ ३ ॥

**काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।**
**स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः ॥४॥**

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः । काल्याद्या विश्वरुच्यन्ता लेलायमाना अग्नेर्हविराहुतिग्रसनार्था एताः किल सप्त जिह्वाः ॥ ४ ॥

**एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् ।**
**तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥५॥**

एतेष्वग्निजिह्वाभेदेषु योऽग्निहोत्री चरते कर्माचरत्यग्निहोत्रादिकं भ्राजमानेषु दीप्यमानेषु । यथाकालं च यस्य कर्मणो यः कालः तं कालं अनतिक्रम्य यथाकालं यजमानमाददायन्नाददाना आहुतयो यजमानेन निर्वर्तितास्तं नयन्ति प्रापयन्ति । एता आहुतयो या इमा अनेन निर्वर्तिताः सूर्यस्य रश्मयो भूत्वा, रश्मिद्वारैरित्यर्थः । यत्र यस्मिन्स्वर्गे देवानां पतिरिन्द्र एकः सर्वानुपरि अधिवसतीत्यधिवासः ॥ ५ ॥

**एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति। प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः६**

कथं सूर्यस्य रश्मिभिर्यजमानं वहन्तीत्युच्यते । एह्येहीत्याह्वयन्त्यः । तं यजमानं आहुतयः सुवर्चसो दीप्तिमत्यः । किञ्च प्रियामिष्टां वाचं स्तुत्यादिलक्षणां अभिवदन्त्य उच्चारयन्त्योऽर्चयन्त्यः पूजयन्त्यः, एष वो युष्माकं पुण्यः सुकृतः पन्था ब्रह्मलोकः फलरूपः । एवं प्रियां वाचमभिवदन्त्यो वहन्तीत्यर्थः । ब्रह्मलोकः स्वर्गः प्रकरणात् ॥ ६ ॥

**प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥७॥**

एतच्च ज्ञानरहितं कर्म एतावत्फलमविद्याकामकर्मकार्यमतोऽसारं दुःखमूलमिति निन्द्यते । प्लवा विनाशिन इत्यर्थः । हि यस्मादेतेऽदृढा अस्थिरा यज्ञरूपा यज्ञस्य रूपाणि यज्ञरूपा यज्ञनिर्वर्तका अष्टादशाष्टादशसङ्ख्याकाः, षोडशर्त्विजः पत्नी यजमानश्चेत्यष्टादश । एतदाश्रयं कर्मोक्तं कथितं शास्त्रेण । येष्वष्टादशस्ववरं केवलं ज्ञानवर्जितं कर्म । अतस्तेषां अवरकर्माश्रयाणां अष्टादशानामदृढतया प्लवत्वात्प्लवते सह फलेन तत्साध्यं कर्म । कुण्डविनाशादिव क्षीरदध्यादीनां तत्स्थानां नाशः । यत एवमेतत्कर्म श्रेयःकारणमिति येऽभिनन्दन्त्यभिहृष्यन्त्यविवेकिनो मूढा, अतस्ते जरां च मृत्युं च जरामृत्युं कञ्चित्कालं स्वर्गे स्थित्वा पुनरेवापि यन्ति भूयोऽपि गच्छन्ति ॥ ७ ॥

**अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥८॥**

किञ्च अविद्यायामन्तरे मध्ये वर्तमाना अविवेकप्रायाः स्वयं वयमेव धीरा धीमन्तः पण्डिता विदितवेदितव्याश्चेति मन्यमाना आत्मानं सम्भावयन्तः, ते च जङ्घन्यमाना जरारोगाद्यनेकानर्थव्रातैर्हन्यमाना भृशं पीड्यमानाः परियन्ति विभ्राम्यन्ति मूढाः । दर्शनवर्जितत्वादन्धेनैव अचक्षुष्केणैव नीयमानाः प्रदर्श्यमानमार्गाः यथा लोकेऽन्धा अक्षिरहिता गर्तकण्टकादौ पतन्ति तद्वत् ॥ ८ ॥

**अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः। यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते॥९॥**

किञ्च अविद्यायां बहुधा बहुप्रकारं वर्तमाना वयमेव कृतार्थाः कृतप्रयोजना इत्येवमभिमन्यन्त्यभिमन्यन्ते अभिमानं कुर्वन्ति बाला अज्ञानिनः। यत् यस्मादेवं कर्मिणो न प्रवेदयन्ति तत्त्वं न जानन्ति रागात्कर्मफलरागाभिभवनिमित्तं तेन कारणेनातुरा दुःखार्ताः सन्तः क्षीणलोकाः क्षीणकर्मफलाः स्वर्गलोकाच्च्यवन्ते॥ ९॥

**इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः। नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति॥१०॥**

इष्टापूर्तम्। इष्टं यागादि श्रौतं कर्म। पूर्तं वापीकूपतडागादि स्मार्तं मन्यमाना एतदेवातिशयेन पुरुषार्थसाधनं वरिष्ठं प्रधानमिति चिन्तयन्तः, अन्यदात्मज्ञानाख्यं श्रेयःसाधनं न वेदयन्ते न जानन्ति प्रमूढाः पुत्रपशुबान्धवादिषु प्रमत्ततया मूढाः। ते च नाकस्य स्वर्गस्य पृष्ठं उपरिस्थाने सुकृते भोगायतने अनुभूत्वाऽनुभूय कर्मफलं पुनरिमं लोकं मानुषमस्माद्धीनतरं वा तिर्यङ्नरकादिलक्षणं यथाकर्मशेषं विशन्ति॥ १०॥

**तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्यचर्यां चरन्तः। सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा॥ ११॥**

ये पुनस्तद्विपरीता ज्ञानयुक्ता वानप्रस्थाः सन्न्यासिनश्च, तपःश्रद्धे हि, तपः स्वाश्रमविहितं कर्म, श्रद्धा हिरण्यगर्भादिविषया विद्या, ते तपःश्रद्धे उपवसन्ति सेवन्तेऽरण्ये वर्तमानाः सन्तः। शान्ता उपरतकरणग्रामाः। विद्वांसो गृहस्थाश्च ज्ञानप्रधाना इत्यर्थः। भैक्ष्यचर्यां चरन्तः परिग्रहाभावादुपवसन्त्यरण्य इति सम्बन्धः। सूर्यद्वारेण सूर्योपलक्षितेनोत्तरायणेन पथा ते विरजा विरजसः क्षीणपुण्यपापकर्माणः सन्त इत्यर्थः। प्रयान्ति प्रकर्षेण यान्ति यत्र यस्मिन्सत्यलोकादावमृतः स पुरुषः प्रथमजो हिरण्यगर्भो ह्यव्ययात्माऽव्ययस्वभावो यावत्संसारस्थायी। एतदन्तास्तु संसारगतयोऽपरविद्यागम्याः। ननु—एतां मोक्षमिच्छन्ति

केचित् । न, 'इहैव सर्वे प्रविलीयन्ति कामाः' 'ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति' इत्यादिश्रुतिभ्यः । अप्रकरणाच्च । अपरविद्याप्रकरणे हि प्रवृत्ते न ह्यकस्मान्मोक्षप्रसङ्गोऽस्ति । विरजस्त्वं त्वापेक्षिकं, समस्तम् अपरविद्याकार्यं साध्यसाधनलक्षणं क्रियाकारकफलभेदभिन्नं द्वैतम् । एतावदेव यद्धिरण्यगर्भप्राप्त्यवसानम् । तथा च मनुनोक्तं स्थावराद्यां संसारगतिमनुक्रामता—"ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च । उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः ॥" इति ॥ ११ ॥

**परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ॥ तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ १२ ॥**

अथेदानीं अस्मात्साध्यसाधनरूपात्सर्वस्मात्संसाराद्विरक्तस्य परस्यां विद्यायामधिकारप्रदर्शनार्थमिदमुच्यते—परीक्ष्य यदेतदृग्वेदाद्यपरविद्याविषयं स्वाभाविकाविद्याकामकर्मदोषवत्पुरुषानुष्ठेयं अविद्यादिदोषवन्तमेव पुरुषं प्रति विहितत्वात्तदनुष्ठानकार्यभूताश्च लोका ये दक्षिणोत्तरमार्गलक्षणाः फलभूताः ये च विहिताकरणप्रतिषेधातिक्रमदोषसाध्या नरकतिर्यक्प्रेतलक्षणाः, तानेतान्परीक्ष्य प्रत्यक्षानुमानोपमानागमैः सर्वतो याथात्म्येनावधार्य लोकान्संसारगतिभूतान् अव्यक्तादिस्थावरान्तान् व्याकृताव्याकृतलक्षणान् बीजाङ्कुरवदितरेतरोत्पत्तिनिमित्तान् अनेकानर्थशतसहस्रसङ्कुलान् कदलीगर्भवदसारान् मायामरीच्युदकगन्धर्वनगराकारस्वप्नजलबुद्बुदफेनसमान् प्रतिक्षणप्रध्वंसान्पृष्ठतः कृत्वा अविद्याकामदोषप्रवर्तितकर्मचितान्धर्माधर्मनिर्वर्तितानित्येतत् । ब्राह्मणः ब्राह्मणस्यैव विशेषतोऽधिकारः सर्वत्यागेन ब्रह्मविद्यायामिति ब्राह्मणग्रहणम् । परीक्ष्य लोकान्किं कुर्यादित्युच्यते— निर्वेदं निःपूर्वो विदिरत्र वैराग्यार्थे । वैराग्य(१)मायात्कुर्यादित्येतत् । स वैराग्यप्रकारः दर्श्यते—इह संसारे नास्ति कश्चिदप्यकृतः पदार्थः । सर्व एव हि लोकाः कर्मचिताः कर्मकृतत्वाच्चानित्याः । न नित्यं किंचिदस्तीत्यभिप्रायः । सर्वन्तु कर्मानित्यस्यैव साधनम् । यस्माच्चतुर्विधमेव हि सर्वं कर्म कार्यं उत्पाद्यमाप्यं संस्कार्यं

( १ ) वैराग्यं गच्छेदिति विधिः ।

विकार्यं वा । नातःपरं कर्मणो विशेषोऽस्ति । अहं च नित्येनामृतेनाभयेन कूटस्थेनाचलेन ध्रुवेणार्थेनार्थी, न तद्विपरीतेन । अतः किं कृतेन कर्मणा आयासबहुलेन अनर्थसाधनेनेत्येवं निर्विण्णोऽभयं शिवमकृतं नित्यं पदं यत्तद्विज्ञानार्थं विशेषेण अधिगमार्थं स निर्विण्णो ब्राह्मणो गुरुमेवाचार्यं शमदमादिसम्पन्नमभिगच्छेत् । शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषणं न कुर्यादित्येतत् गुरुमेवेत्यवधारणफलम् । समित्पाणिः समिद्भारगृहीतहस्तः श्रोत्रियं अध्ययनश्रुतार्थसम्पन्नं ब्रह्मनिष्ठं हित्वा सर्वकर्माणि केवलेऽद्वये ब्रह्मणि निष्ठा यस्य सोऽयं ब्रह्मनिष्ठो, जपनिष्ठस्तपोनिष्ठ इति यद्वत् । नहि कर्मिणो ब्रह्मनिष्ठता सम्भवति कर्मात्मज्ञानयोर्विरोधात् । स तं गुरुं विधिवदुपसन्नः प्रसाद्य पृच्छेदक्षरं पुरुषं सत्यम् ॥ १२ ॥

**तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय ।**
**येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥१३॥**

## इति प्रथममुण्डके द्वितीयः खण्डः ॥ इति प्रथममुण्डकम् ॥

तस्मै स विद्वान्गुरुर्ब्रह्मविदुपसन्नायोपगताय । सम्यग्यथाशास्त्रमित्येतत् । प्रशान्तचित्ताय उपरतदर्पादिदोषाय । शमान्विताय बाह्येन्द्रियोपरमेण च युक्ताय । सर्वतो विरक्तायेत्येतत् । येन विज्ञानेन यया विद्यया च परया अक्षरमद्रेश्यादिविशेषणं तदेवाक्षरं पुरुषशब्दवाच्यं पूर्णत्वात्पुरि शयनाच्च, सत्यं तदेव परमार्थस्वाभाव्यादव्ययं, अक्षरं चाक्षरणादक्षतत्वादक्षयत्वाच्च, वेद विजानाति तां ब्रह्मविद्यां तत्त्वतो यथावत्प्रोवाच प्रब्रूयादित्यर्थः । आचार्यस्याप्ययमेव नियमो यन्न्यायप्राप्तसच्छिष्यनिस्तारणं अविद्यामहोदधेः ॥ १३ ॥ इति द्वितीयः खण्डः ॥

इति मुण्डकोपनिषद्भाष्ये प्रथममुण्डकं समाप्तम् ॥

## द्वितीयमुण्डके प्रथमः खण्डः ॥

अपरविद्यायाः सर्वं कार्यमुक्तम् । स च संसारो यत्सारो यस्मान्मूलादक्षरात् सम्भवति यस्मिंश्च प्रलीयते, तदक्षरं पुरुषाख्यं सत्यम् । यस्मिन्विज्ञाते सर्वमिदं विज्ञातं भवति, तत्परस्या ब्रह्मविद्याया विषयः । स वक्तव्य इत्युत्तरो ग्रन्थ आरभ्यते—

**तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति ॥ १ ॥**

यदपरविद्याविषयं कर्मफललक्षणं सत्यं तदापेक्षिकम्। इदं तु परविद्याविषयं परमार्थसल्लक्षणत्वात्। तदेतत्सत्यं यथाभूतं विद्याविषयम्। अविद्याविषयत्वाच्चानृतमितरत्। अत्यन्तपरोक्षत्वात्कथं नाम प्रत्यक्षवत्सत्यमक्षरं प्रतिपद्येरन्निति दृष्टान्तमाह—यथा सुदीप्तात्सुष्ठु दीप्तादिद्धात्पावकादग्नेर्विस्फुलिङ्गा अग्न्यवयवाः सहस्रशोऽनेकशः प्रभवन्ते निर्गच्छन्ति सरूपा अग्निसलक्षणा एव, तथा उक्तलक्षणादक्षराद्विविधा नानादेहोपाधिभेदं अनुविधीयमानत्वाद्विविधा, हे सोम्य भावा जीवा आकाशादिवत् घटादिपरिच्छिन्नाः सुषिरभेदा घटाद्युपाधिप्रभेदमनुभवन्ति। एवं नानानामरूपकृतदेहोपाधिप्रभवमनुप्रजायन्ते तत्र चैव तस्मिन्नेवाक्षरेऽपियन्ति देहोपाधिविलयमनु विलीयन्ते घटादिविलयमन्विव सुषिरभेदाः। यथा आकाशस्य सुषिरभेदोत्पत्तिप्रलयनिमित्तत्वं घटाद्युपाधिकृतमेव, तद्वदक्षरस्यापि नामरूपकृतदेहोपाधिनिमित्तमेव जीवोत्पत्तिप्रलयनिमित्तत्वम् ॥ १ ॥

**दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ॥**
**अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ २ ॥**

नामरूपबीजभूतात् अव्याकृताख्यात् स्वविकारापेक्षया परादक्षरात्परं यत्सर्वोपाधिभेदवर्जितमक्षरस्यैव स्वरूपमाकाशस्येव सर्वमूर्तिवर्जितं नेति नेतीत्यादिविशेषणं विवक्षन्नाह। दिव्यो द्योतनवान्स्वयंज्योतिष्ट्वात्। दिवि वा स्वात्मनि भवोऽलौकिको वा। हि यस्मादमूर्तः सर्वमूर्तिवर्जितः पुरुषः पूर्णः पुरिशयो वा, दिव्यो ह्यमूर्तः पुरुषः, सबाह्याभ्यन्तरः सह बाह्याभ्यन्तरेण वर्तत इति। अजो न जायते कुतश्चित्स्वतोऽन्यस्य जन्मनिमित्तस्य चाभावात्। यथा जलबुद्बुदादेर्वाय्वादि। यथा नभःसुषिरभेदानां घटादि सर्वभाववि(१)काराणां जनिमूलत्वात् तत्प्रतिषेधेन सर्वे प्रतिषिद्धा भवन्ति। सबाह्याभ्यन्तरो ह्यजः अतः अजरः अमृतोऽक्षरो ध्रुवोऽभय इत्यर्थः। यद्यपि देहाद्युपाधिभेददृष्टीनां अविद्यावशात्

(१) जायते अस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यति चेति भावविकाराः।

देहभेदेषु सप्राणः समनाः सेन्द्रियः सविषय इव प्रत्यवभासते तल्मलादिमदिवाकाशं, तथापि तु स्वतः परमार्थदृष्टीनां अप्राणोऽविद्यमानः क्रियाशक्तिभेदवाञ्श्चलनात्मको वायुर्यस्मिन्नसावप्राणः। तथा अमना अनेकज्ञानशक्तिभेदवत्सङ्कल्पाद्यात्मकं मनोऽप्यविद्यमानं यस्मिन्सोऽयममनाः। अप्राणो ह्यमनाश्चेति प्राणादिवायुभेदाः कर्मेन्द्रियाणि तद्विषयाश्च तथा च बुद्धिमनसी बुद्धीन्द्रियाणि तद्विषयाश्च प्रतिषिद्धा वेदितव्याः। यथा श्रुत्यन्तरे—'ध्यायतीव लेलायतीव' इति। यस्माच्चैवं प्रतिषिद्धोपाधिद्वयस्तच्छुभ्रः शुद्धः। अतः अक्षरा(१)न्नामरूपबीजोपाधिलक्षितस्वरूपात् सर्वकार्यकरणबीजत्वेनोपलक्ष्यमाणत्वात्परं तत्त्वं तदुपाधिलक्षणं अव्याकृताख्यमक्षरं सर्वविकारेभ्यः तस्मात्परतोऽक्षरात्परो निरुपाधिकः पुरुष इत्यर्थः। यस्मिंस्तदाकाशाख्यमक्षरं सव्यवहारविषयमोतं प्रोतं च। कथं पुनरप्राणादिमत्त्वं तस्येत्युच्यते। यदि हि प्राणादयः प्रागुत्पत्तेः पुरुष इव स्वेनात्मना सन्ति, तदा पुरुषस्य प्राणादिना विद्यमानेन प्राणादिमत्त्वं भवेत्। न तु ते प्राणादयः प्रागुत्पत्तेः पुरुष इव स्वेनात्मना सन्ति। अतोऽप्राणादिमान्परः पुरुषः। यथाऽनुत्पन्ने पुत्रेऽपुत्रो देवदत्तः॥ २॥

**एतस्माज्जायते(२) प्राणो मनः सर्वेन्द्रियाणि च।**
**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥ ३॥**

कथं ते न सन्ति प्राणादय इत्युच्यते—यस्मादेतस्मादेव पुरुषान्नामरूपबीजोपाधिलक्षिताज्जायते उत्पद्यतेऽविद्याविषयो विकारभूतो नामधेयोऽनृतात्मकः प्राणः, 'वाचारम्भणं विकारो नामधेयं' 'अनृतम्' इति श्रुत्यन्तरात्। न हि तेनाविद्याविषयेणानृतेन प्राणेन सप्राणत्वं परस्य स्यादपुत्रस्य स्वप्नदृष्टेनेव पुत्रेण सपुत्रत्वम्। एवं मनः सर्वाणि चेन्द्रियाणि विषयाश्चैतस्मादेव जायन्ते। तस्मात्सिद्धमस्य निरुपचरितं अप्राणादिमत्त्वमित्यर्थः। यथा च प्रागुत्पत्तेः परमार्थतोऽसन्तस्तथा प्रलीनाश्चेति द्रष्टव्याः। यथा करणानि मनश्चेन्द्रियाणि च, तथा शरीरविषयकार-

---

(१) अक्षरान्नामरूपमिति—नामरूपयोर्बीजम्ब्रह्म तयोरुपाधितया लक्षितं शुद्धस्य कारणत्वानुपपत्त्या गमितं स्वरूपमस्येति तथोक्तम्। तस्मादुपाधिरूपात्तद्विशिष्टरूपाच्च परतोऽक्षरात्पर इति सम्बन्धः।

(२) प्रलीयते च इत्यपि द्रष्टव्यम्।

णानि भूतानि । खमाकाशं वायुरन्तर्बाह्य आवहादिभेदः । ज्योतिरग्निः । आप उदकम् । पृथिवी धरित्री विश्वस्य सर्वस्य धारिणी । एतानि च शब्दस्पर्शरूपरसगन्धोत्तरोत्तरगुणानि पूर्वपूर्वगुणसहितान्येतस्मादेव जायन्ते ।

सङ्क्षेपतः परविद्याविषयमक्षरं निर्विशेषं पुरुषं सत्यं 'दिव्यो ह्यमूर्तः' इत्यादिना मन्त्रेणोक्त्वा, पुनस्तदेव सविशेषं विस्तरेण वक्तव्यमिति प्रववृते, सङ्क्षेपविस्तरोक्तो हि पदार्थः सुखाधिगम्यो भवति सूत्रभाष्योक्तिवदिति ॥ ३ ॥

**अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।**
**वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥**

यो हि प्रथमजात्प्राणाद्धिरण्यगर्भाज्जायतेऽण्डस्यान्तर्विराट्, स तत्त्वान्तरित्वेन लक्ष्यमाणोऽप्येतस्मादेव पुरुषाज्जायते एतन्मयश्च इत्येतदर्थमाह । तं च विशिनष्टि । अग्निर्द्युलोकः 'असौ वाव लोको गौतमाग्निः' इति श्रुतेः । मूर्धा यस्योत्तमाङ्गं शिरः । चक्षुषी चन्द्रसूर्यौ । चन्द्रश्च सूर्यश्चेति । यस्येति सर्वत्रानुषङ्गः कर्तव्यः । अस्येत्यस्य पदस्य वक्ष्यमाणस्य यस्येति विपरिणामं कृत्वा । दिशः श्रोत्रे यस्य । वाग्विवृता उद्घाटिताः प्रसिद्धा वेदा यस्य । वायुः प्राणो यस्य । हृदयमन्तःकरणं विश्वं समस्तं जगदस्य यस्येत्येतत् । सर्वं ह्यन्तःकरणविकारमेव जगन्मनस्येव सुषुप्ते प्रलयदर्शनात् । जागरितेऽपि तत एव अग्निविस्फुलिङ्गवद्विप्रतिष्ठानात् । यस्य च पद्भ्यां जाता पृथिवी । एष देवो विष्णुरनन्तः प्रथमशरीरी त्रैलोक्यदेहोपाधिः सर्वेषां भूतानामन्तरात्मा ॥ ४ ॥

स हि सर्वभूतेषु द्रष्टा श्रोता मन्ता विज्ञाता सर्वकारणात्मा, पञ्चाग्निद्वारेण च याः संसरन्ति प्रजास्ता अपि तस्मादेव पुरुषात्प्रजायन्त इत्युच्यते—

**तस्मादग्निः समिधो यस्य सूर्यः सोमात्पर्जन्य ओषधयः पृथिव्याम् ।**
**पुमान्रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात्सम्प्रसूताः ॥ ५ ॥**

तस्मात्परस्मात्पुरुषात्प्रजावस्थानविशेषरूपोऽग्निः । स विशेष्यते—समिधो यस्य सूर्यः, समिध इव समिधः । सूर्येण हि द्युलोकः समिध्यते । ततो हि द्युलोकाग्नेः निष्पन्नात्सोमात्पर्जन्यो द्वितीयोऽग्निः सम्भवति । तस्माच्च पर्जन्यादोषधयः पृथिव्यां सम्भवन्ति । ओषधिभ्यः पुरुषाग्नौ हुताभ्य उपादानभूताभ्यः पुमानग्नौ

रेतः सिञ्चति योषितायां योषिति योषाग्नौ स्त्रियामिति । एवं क्रमेण बह्वीर्बह्वयः प्रजा ब्राह्मणाद्याः पुरुषात्परस्मात्सम्प्रसूताः समुत्पन्नाः ॥ ५ ॥

**तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च।**
**संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः ॥६॥**

किञ्च कर्मसाधनानि फलानि च तस्मादेवेत्याह । कथं ? तस्मात्पुरुषादृचो नियताक्षरपादावसाना गायत्र्यादिच्छन्दोविशिष्टा मन्त्राः। साम पाञ्चभक्तिकं साप्तभक्तिकं च (१)स्तोभादिगीतविशिष्टम् । यजूंष्यनियताक्षरपादावसानानि वाक्यरूपाणि । एवं त्रिविधा मन्त्राः । दीक्षाः मौञ्ज्यादिलक्षणा कर्तृनियमविशेषाः । यज्ञाश्च सर्वेऽग्निहोत्रादयः । क्रतवः सयूपाः । दक्षिणाश्च एकगवाद्या अपरिमितसर्वस्वान्ताः ! संवत्सरश्च कालः कर्माङ्गः । यजमानश्च कर्ता । लोकास्तस्य कर्मफलभूताः । ते विशेष्यन्ते–सोमो यत्र येषु लोकेषु पवते पुनाति लोकान्यत्र च येषु सूर्यस्तपति।ते च दक्षिणायनोत्तरायणमार्गद्वयगम्या विद्वदविद्वत्कर्तृफलभूताः॥६॥

**तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयांसि।**
**प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥७॥**

तस्माच्च पुरुषात्कर्माङ्गभूता देवा बहुधा वस्वादिगणभेदेन सम्प्रसूताः सम्यक्प्रसूताः । साध्या देवविशेषाः । मनुष्याः कर्माधिकृताः । पशवो ग्राम्यारण्याः । वयांसि पक्षिणः । जीवनं च मनुष्यादीनां प्राणापानौ, व्रीहियवौ हविरर्थौ । तपश्च कर्माङ्गं पुरुषसंस्कारलक्षणं स्वतन्त्रं च फलसाधनम्। श्रद्धा यत्पूर्वकः सर्वपुरुषार्थसाधनप्रयोगः चित्तप्रसाद आस्तिक्यबुद्धिः । तथा सत्यमनृतवर्जनं यथाभूतार्थवचनं चापीडाकरम् । ब्रह्मचर्यं मैथुनासमाचारः। विधिश्चेतिकर्तव्यता ॥७॥

**सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः ।**
**सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त॥ ८॥**

किञ्च सप्त शीर्षण्याः प्राणाः तस्मादेव पुरुषात्प्रभवन्ति । तेषां च सप्तार्चिषो दीप्तयः स्वविषयावद्योतनानि । तथा सप्त समिधः सप्त विषयाः । विषयै

---

१ अर्थशून्यो वर्ण इत्यर्थः।

हि समिध्यन्ते प्राणाः । सप्त होमास्तद्विषयविज्ञानानि 'यदस्य विज्ञानं तज्जुहोति' इति श्रुत्यन्तरात् । किञ्च सप्तेमे लोका इन्द्रियस्थानानि येषु चरन्ति सञ्चरन्ति प्राणाः । प्राणा येषु चरन्तीति प्राणानां विशेषणमिदं प्राणापानादिनिवृत्त्यर्थम् । गुहायां शरीरे हृदये वा स्वापकाले शेरत इति गुहाशयाः । निहिताः स्थापिता धात्रा सप्त सप्त प्रतिप्राणिभेदम् । यानि च (१) आत्मयाजिनां विदुषां कर्माणि कर्मफलानि चाविदुषां च कर्माणि तत्साधनानि कर्मफलानि च सर्वं चैतत्परस्मादेव पुरुषात्सर्वज्ञात्प्रसूतमिति प्रकरणार्थः ॥ ८ ॥

**अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ।**
**अतश्च सर्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥९॥**

अतः पुरुषात्समुद्राः सर्वे क्षाराद्याः । गिरयश्च हिमवदादयोऽस्मादेव पुरुषात्सर्वे । स्यन्दन्ते स्रवन्ति गङ्गाद्याः । सिन्धवो नद्यः सर्वरूपा बहुरूपाः । अस्मादेव पुरुषात्सर्वा ओषधयो व्रीहियवाद्याः । रसश्च मधुरादिः षड्विधो येन रसेन भूतैः पञ्चभिः स्थूलैः परिवेष्टितस्तिष्ठते तिष्ठति ह्यन्तरात्मा लिङ्गं सूक्ष्मं शरीरम् । तद्ध्यन्तराले शरीरस्य आत्मनश्च आत्मवद्वर्तत इत्यन्तरात्मा ॥ ९ ॥

**पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ।**
**एतद्यो वेद निहितं गुहायांसोऽविद्याग्रन्थिं विकिरतीह सोम्य॥१०॥**

**इति द्वितीयमुण्डके प्रथमः खण्डः ॥**

एवं पुरुषात्सर्वमिदं सम्प्रसूतम् । अतो वाचारम्भणं विकारो नामधेयं अनृतं पुरुष इत्येव सत्यम् । अतः पुरुष एवेदं विश्वं सर्वम् । न विश्वं नाम पुरुषादन्यत्किञ्चिदस्ति । अतो यदुक्तं तदेतदभिहितं 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति । एतस्मिन्हि परस्मिन्नात्मनि सर्वकारणे पुरुषे विज्ञाते पुरुष एवेदं विश्वं नान्यदस्तीति विज्ञातं भवतीति । किं पुनरिदं विश्वमित्युच्यते—कर्माग्निहोत्रादिलक्षणम् । तपो ज्ञानं तत्कृतं फलमन्यदेतावद्धीदं सर्वम् । तच्चैतद्ब्रह्मणः कार्यम् । तस्मात्सर्वं ब्रह्म परामृतं परममृतमहमेवेति यो वेद निहितं

---

(१) आत्मयाजिनामिति – सकलमिदमहञ्च परमात्मैवेति भावनापूर्वकं परमेश्वराराधनबुद्ध्या ये यजन्ति तेषामित्यर्थः ।

स्थितं गुहायां हृदि सर्वप्राणिनां, स एवं विज्ञानादविद्याग्रन्थिं ग्रन्थिमिव दृढीभूतां अविद्यावासनां विकिरति विक्षिपति विनाशयति इह जीवन्नेव, न मृतः सन् हे सोम्य प्रियदर्शन ॥१०॥

इति द्वितीयमुण्डके प्रथमः खण्डः ॥ १ ॥

---

## द्वितीयमुण्डके द्वितीयः खण्डः ।

**आविः सन्निहितं गुहाचरं नाम महत्पदमत्रैतत्समर्पितम् । एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥१॥**

अरूपं सदक्षरं केन प्रकारेण विज्ञेयमित्युच्यते—आविः प्रकाशं सन्निहितं वागाद्युपाधिभिर्ज्वलति भ्राजतीति श्रुत्यन्तराच्छब्दादीनुपलभमानवदवभासते। दर्शनश्रवणमननविज्ञानाद्युपाधिधर्मैराविर्भूतं सल्लक्ष्यते हृदि सर्वप्राणिनाम् । यदेतदाविर्भूतं ब्रह्म सन्निहितं सम्यक्स्थितं हृदि, तत् गुहाचरं नाम गुहायां चरतीति दर्शनश्रवणादिप्रकारैर्गुहाचरमिति प्रख्यातम् । महत्सर्वमहत्त्वात्पदं पद्यते सर्वेणेति, सर्वपदार्थास्पदत्वात् । कथं तन्महत्पदमित्युच्यते—यतोऽत्रास्मिन् ब्रह्मण्येतत्सर्वं समर्पितं प्रवेशितं रथनाभाविवाराः, एजच्चलत्पक्ष्यादि, प्राणत्प्राणितीति प्राणापानादिमन्मनुष्यपश्वादि, निमिषच्च यन्निमेषादिक्रियावत्, यच्चानिमिषत्। चशब्दात्समस्तमेतदत्रैव ब्रह्मणि समर्पितम् । एतद्यदास्पदं सर्वं जानथ हे शिष्याः, अवगच्छथ तदात्मभूतं भवतां, सदसत्स्वरूपम् । सदसतोर्मूर्तामूर्तयोः स्थूलसूक्ष्मयोस्तद्व्यतिरेकेणाभावात्। वरेण्यं वरणीयं तदेव हि सर्वस्य नित्यत्वात्प्रार्थनीयम् । परं व्यतिरिक्तं विज्ञानात्प्रजानामिति व्यवहितेन सम्बन्धः । यल्लौकिकविज्ञानागोचरमित्यर्थः । यद्वरिष्ठं वरतमं सर्वपदार्थेषु वरेषु, तद्ध्येकं ब्रह्म अतिशयेन वरं सर्वदोषरहितत्वात् ॥ १ ॥

**यदर्चिमद्यदणुभ्योऽणु च यस्मिँल्लोका निहिता लोकिनश्च ।**
**तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः ।**
**तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि ॥ २ ॥**

किञ्च यदर्चिमद्दीप्तिमत्। तद्दीप्त्या आदित्यादि दीप्यत इति दीप्तिमद्ब्रह्म। किञ्च यदणुभ्यः श्यामाकादिभ्योऽप्यणु च सूक्ष्मम्। चशब्दात्स्थूलेभ्योऽप्यतिशयेन स्थूलं पृथिव्यादिभ्यः। यस्मिँल्लोका भूरादयो निहिताः स्थिताः। ये च लोकिनो लोकनिवासिनो मनुष्यादयः, चैतन्याश्रया हि सर्वे प्रसिद्धाः। तदेतत्सर्वाश्रयं अक्षरं ब्रह्म स प्राणस्तदु वाङ्मनो वाक्च मनश्च सर्वाणि च करणानि तदु अन्तश्चैतन्यं, चैतन्याश्रयो हि प्राणेन्द्रियादिसर्वसङ्घातः 'प्राणस्य प्राणं' इति श्रुत्यन्तरात्। यत्प्राणादीनामन्तश्चैतन्यमक्षरं तदेतत्सत्यमवितथम्। अतोऽमृतमविनाशि तद्वेद्धव्यं मनसा ताडयितव्यम्। तस्मिन्मनःसमाधानं कर्तव्यमित्यर्थः। यस्मादेवं हे सोम्य विद्ध्यक्षरे चेतः समाधत्स्व ॥ २ ॥

**धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्दधीत।**
**आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ ३ ॥**

कथं वेद्धव्यमित्युच्यते—धनुरिष्वासनं गृहीत्वाऽऽदाय औपनिषदमुपनिषत्सु भवं प्रसिद्धं महास्त्रं, महच्च तदस्त्रं च महास्त्रं धनुस्तस्मिञ्शरम्। किंविशिष्टमित्याह। उपासानिशितं सन्तताभिध्यानेन तनूकृतं संस्कृतमित्येतत्। स दधीत सन्धानं कुर्यात्। सन्धाय च आयम्याकृष्य सेन्द्रियमन्तःकरणं स्वविषयाद्विनिवर्त्य लक्ष्य एवावर्जितं कृत्वेत्यर्थः। न हि हस्तेनेव धनुष आयमनमिह सम्भवति। तद्भावगतेन तस्मिन्ब्रह्मण्यक्षरे लक्ष्ये भावना भावस्तद्गतेन चेतसा लक्ष्यं तदेव यथोक्तलक्षणमक्षरं सोम्य विद्धि ॥ ३ ॥

**प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।**
**अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥**

यदुक्तं धनुरादि तदुच्यते—प्रणव ओङ्कारो धनुः। यथा इष्वासनं लक्ष्ये शरस्य प्रवेशकारणं, तथा आत्मशरस्याक्षरे लक्ष्ये प्रवेशकारणमोङ्कारः। प्रणवेन ह्यभ्यस्यमानेन संस्क्रियमाणः तदालम्बनोऽप्रतिबन्धेनाक्षरेऽवतिष्ठते। यथा धनुषा अस्त इषुर्लक्ष्ये। अतः प्रणवो धनुरिव धनुः। शरो ह्यात्मा उपाधिलक्षणः पर एव जले सूर्यादिवदिह प्रविष्टो देहे सर्वबौद्धप्रत्ययसाक्षितया। स शर इव स्वात्मन्येवार्पितोऽक्षरे ब्रह्मणि। अतो ब्रह्म तल्लक्ष्यमुच्यते लक्ष्य इव मनः समाधित्सु-

भिरात्मभावेन लक्ष्यमाणत्वात् । तत्रैवं सति अप्रमत्तेन बाह्यविषयोपलब्धितृष्णाप्रमादवर्जितेन सर्वतो विरक्तेन जितेन्द्रियेणैकाग्रचित्तेन वेद्धव्यं ब्रह्म लक्ष्यम् । ततस्तद्वेधनादूर्ध्वं शरवत्तन्मयो भवेत् । यथा शरस्य लक्ष्यैकात्मत्वं फलं भवति । तथा देहाद्यात्मप्रत्ययतिरस्करणेन अक्षरैकात्मत्वं फलमापादयेदित्यर्थः ॥ ४ ॥

**यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।**
**तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ।५।**

अक्षरस्यैव दुर्लक्षत्वात्पुनः पुनर्वचनं सुलक्षणार्थम् । यस्मिन्नक्षरे पुरुषे द्यौः पृथिवी चान्तरिक्षं चोतं समर्पितं मनश्च सह प्राणैः करणैरन्यैः सर्वैः, तमेव सर्वाश्रयमेकमद्वितीयं जानथ जानीत हे शिष्याः । आत्मानं प्रत्यक्स्वरूपं युष्माकं सर्वप्राणिनां च ज्ञात्वा चान्या वाचोऽपरविद्यारूपा विमुञ्चथ विमुञ्चत परित्यजत । तत्प्रकाश्यं च सर्वं कर्म ससाधनम् । यतोऽमृतस्यैष सेतुः एतदात्मज्ञानममृतस्यामृतत्वस्य मोक्षस्य प्राप्तये सेतुरिव सेतुः । संसारमहोदधेरुत्तरणहेतुत्वात् । तथा च श्रुत्यन्तरम्—'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति ॥५॥

**अरा इव रथनाभौ संहता यत्र नाड्यः**
**स एषोऽन्तश्चरते बहुधा जायमानः ।**
**ओमित्येवं ध्यायथ आत्मानं**
**स्वस्ति वः पाराय तमसः परस्तात् ॥ ६ ॥**

किञ्च, अरा इव । यथा रथनाभौ समर्पिता अरा एवं संहताः सम्प्रविष्टा यत्र यस्मिन्हृदये सर्वतो देहव्यापिन्यो नाड्यः, तस्मिन्हृदये बुद्धिप्रत्ययसाक्षिभूतः स एष प्रकृत आत्मा अन्तर्मध्ये चरते चरति वर्तते । पश्यञ्शृण्वन्मन्वानो विजानन्बहुधाऽनेकधा क्रोधहर्षादिप्रत्ययैर्जायमानः इव जायमानः अन्तःकरणोपाध्यनुविधायित्वात् । वदन्ति लौकिका हृष्टो जातः क्रुद्धो जात इति । तमात्मानमोमित्येवं ओङ्कारालम्बनाः सन्तो यथोक्तकल्पनया ध्यायथ चिन्तयत । उक्तं वक्तव्यं च शिष्येभ्य आचार्येण जानता । शिष्याश्च ब्रह्मविद्याविविदिषुत्वान्निवृत्तकर्माणो मोक्षपथे प्रवृत्ताः । तेषां निर्विघ्नतया ब्रह्मप्राप्तिमाशास्त्याचार्यः—स्वस्ति निर्विघ्नमस्तु वो युष्माकं पाराय परकूलाय । परस्तात् कस्मात् ? अविद्यातमसः । अविद्यारहितब्रह्मात्मस्वरूपगमनायेत्यर्थः ॥ ६ ॥

**यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि ।**
**दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः ॥**

योऽसौ तमसः परस्तात्संसारमहोदधिं तीर्त्वा गन्तव्यः परविद्याविषयः इति स कस्मिन्वर्तत इत्याह—यः सर्वज्ञः सर्वविद्व्याख्यातः । तं पुनर्विशिनष्टि । यस्य एष प्रसिद्धो महिमा विभूतिः । कोऽसौ महिमा ? यस्येमे द्यावापृथिव्यौ शासने विधृते तिष्ठतः । सूर्याचन्द्रमसौ यस्य शासनेऽलातचक्रवदजस्रं भ्रमतः । यस्य शासने सरितः सागराश्च स्वगोचरं नातिक्रामन्ति । तथा स्थावरं जङ्गमं च यस्य शासने नियतम् । तथा चर्तवोऽयने अब्दाश्च यस्य शासनं नातिक्रामन्ति । तथा कर्तारः कर्माणि फलं च यच्छासनात्स्वं स्वं कालं नातिवर्तन्ते । स एष महिमा भुवि लोके यस्य स एष सर्वज्ञ एवम्महिमा देवः । दिव्ये द्योतनवति सर्वबौद्धप्रत्ययकृतद्योतने ब्रह्मपुरे । ब्रह्मणोऽत्र चैतन्यस्वरूपेण नित्याभिव्यक्तत्वात् । ब्रह्मणः पुरं हृदयपुण्डरीकं तस्मिन्यद्व्योम तस्मिन्व्योम्न्याकाशे हृत्पुण्डरीकमध्यस्थे प्रतिष्ठित इवोपलभ्यते । न ह्याकाशवत्सर्वगतस्य गतिरागतिः प्रतिष्ठा वान्यथा सम्भवति ॥

**मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ।**
**तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥७॥**

स आत्मा तत्रस्थो मनोवृत्तिभिरेव विभाव्यत इति मनोमयो, मनउपाधित्वात् । प्राणशरीरनेता प्राणश्च शरीरं च प्राणशरीरं तस्यायं नेता स्थूलाच्छरीराच्छरीरान्तरं प्रति । प्रतिष्ठितोऽवस्थितोऽन्ने भुज्यमानान्नविपरिणामे प्रतिदिनमुपचीयमानेऽपचीयमाने च पिण्डरूपान्ने हृदयं बुद्धिं पुण्डरीकच्छिद्रे सन्निधाय समवस्थाप्य । हृदयावस्थानमेव ह्यात्मनः स्थितिर्न ह्यात्मनः स्थितिरन्ने । तदात्मतत्त्वं विज्ञानेन विशिष्टेन शास्त्राचार्योपदेशजनितेन ज्ञानेन शमदमध्यानसर्वत्यागवैराग्योद्भूतेन परिपश्यन्ति सर्वतः पूर्णं पश्यन्त्युपलभन्ते धीरा विवेकिनः । आनन्दरूपं सर्वानर्थदुःखायासप्रहीणं सुखरूपं अमृतं यद्विभाति विशेषेण स्वात्मन्येव भाति सर्वदा ॥ ७ ॥

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥**
**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ८ ॥**

अस्य परमात्मज्ञानस्य(१) फलमिदमभिधीयते । भिद्यते हृदयग्रन्थिरविद्यावासनाप्रचयो बुद्धयाश्रयः कामः 'कामा येऽस्य हृदि श्रिताः' इति श्रुत्यन्तरात् । हृदयाश्रयोऽसौ नात्माश्रयः । भिद्यते भेदं विनाशमायाति । छिद्यन्ते सर्वे ज्ञेयविषयाः संशया लौकिकानां आमरणात् गङ्गास्रोतोवत्प्रवृत्ता विच्छेदमायान्ति । अस्य विच्छिन्न संशयस्य निवृत्ताविद्यस्य यानि विज्ञानोत्पत्तेः प्राक्तनानि जन्मान्तरे चाप्रवृत्तफलानि ज्ञानोत्पत्तिसहभावीनि च क्षीयन्ते कर्माणि । न त्वेतज्जन्मारम्भकाणि प्रवृत्तफलत्वात् । तस्मिन्सर्वज्ञेऽसंसारिणि परावरे परं च कारणात्मना अवरं च कार्यात्मना तस्मिन्परावरे साक्षादहमस्मीति दृष्टे संसारकारणोच्छेदान्मुच्यत इत्यर्थः ॥ ८ ॥

**हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।**
**तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥९॥**

उक्तस्यैवार्थस्य संक्षेपाभिधायका उत्तरे मन्त्रास्त्रयोऽपि हिरण्मये ज्योतिर्मये बुद्धिविज्ञानप्रकाशे परे कोशे कोश इवासेः । आत्मस्वरूपोपलब्धिस्थानत्वात्परं तत्सर्वाभ्यन्तरत्वात् तस्मिन्विरजं अविद्याद्यशेषदोषरजोमलवर्जितं ब्रह्म सर्वमहत्त्वात्सर्वात्मत्वाच्च निष्कलं निर्गताः कला यस्मात्तन्निष्कलं निरवयवमित्यर्थः । यस्माद्विरजं निष्कलं च, अतस्तच्छुभ्रं शुद्धं ज्योतिषां सर्वप्रकाशात्मनामग्न्यादीनामपि तज्ज्योतिरवभासकम् । अग्न्यादीनामपि ज्योतिष्ट्वं अन्तर्गतब्रह्मात्मचैतन्यज्योतिर्निमित्तमित्यर्थः । तद्धि परं ज्योतिर्यदन्यानवभास्यं आत्मज्योतिः तद्यदात्मविद आत्मानं स्वं शब्दादिविषयबुद्धिप्रत्ययसाक्षिणं ये विवेकिनो विदुर्विजानन्ति ते आत्मविदस्तद्विदुरात्मप्रत्ययानुसारिणः । यस्मात्परं ज्योतिस्तस्मात्त एव तद्विदुर्नेतरे बाह्यार्थप्रत्ययानुसारिणः ॥ ९ ॥

**न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्वं**
**तस्य भासा सर्वमिदं विभाति ॥ १० ॥**

---

( १ ) अस्य परमात्मज्ञानस्येति—जीवन्मुक्तिफलस्याद्वैतवाक्यार्थावगमस्य क्रममुक्तिफलस्य चोपासनस्येत्यर्थः ।

कथं तज्ज्योतिषां ज्योतिरित्युच्यते—न तत्र तस्मिन्स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्यो भाति । तद्ब्रह्म न प्रकाशयतीत्यर्थः । स हि तस्यैव भासा सर्वमन्यदनात्मजातं प्रकाशयति । न तु तस्य स्वतः प्रकाशनसामर्थ्यम् । तथा न चन्द्रतारकं, नेमा विद्युतो भान्ति । कुतोऽयमग्निरस्मद्गोचरः ? किं बहुना । यदिदं जगद्भाति तत्तमेव परमेश्वरं स्वतो भारूपत्वाद्भान्तं दीप्यमानमनुदीप्यते । यथा जलोल्मुकाद्यग्निसंयोगादग्निं दहन्तमनुदहति न स्वतः । तद्वत्तस्यैव भासा दीप्त्या सर्वमिदं सूर्यादिजगद्विभाति । यत एवं तदेव ब्रह्म भाति च विभाति च कार्यगतेन विविधेन भासा, अतस्तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते । न हि स्वतोऽविद्यमानं भासनमन्यस्य कर्तुं शक्नोति । घटादीनां अन्यावभासकत्वादर्शनाद्भारूपाणां चादित्यादीनां तद्दर्शनात् ॥ १० ॥

**ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।**
**अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ११ ॥**

**इति द्वितीयमुण्डके द्वितीयः खण्डः ॥**

यत्तज्ज्योतिषां ज्योतिर्ब्रह्म तदेव सत्यं, सर्वं तद्विकारः वाचारम्भणं विकारो नामधेयमात्रमनृतमितरदित्येतमर्थं विस्तरेण हेतुतः प्रतिपादितं निगमनस्थानीयेन मन्त्रेण पुनरुपसंहरति । ब्रह्मैवोक्तलक्षणं इदं यत्पुरस्तादग्रे ब्रह्माविद्यादृष्टीनां प्रत्यवभासमानं तथा पश्चाद्ब्रह्म तथा दक्षिणतश्च तथोत्तरेण तथैवाधस्तादूर्ध्वं च सर्वतोऽन्यदिव कार्याकारेण प्रसृतं प्रगतं नामरूपवदवभासमानम् । किं बहुना, ब्रह्मैवेदं विश्वं समस्तमिदं जगद्वरिष्ठं वरतमम् । अब्रह्मप्रत्ययः सर्वोऽविद्यामात्रो रज्ज्वामिव सर्पप्रत्ययः । ब्रह्मैवैकं परमार्थसत्यमिति वेदानुशासनम् ॥११॥

इति मुण्डकोपनिषद्भाष्ये द्वितीयं मुण्डकं समाप्तम् ॥ २ ॥

---

## तृतीयमुण्डके प्रथमः खण्डः ।

परा विद्योक्ता यया तदक्षरं पुरुषाख्यं सत्यमधिगम्यते । यदधिगमे हृदयग्रन्थ्यादिसंसारकारणस्य आत्यन्तिकविनाशः स्यात् । तद्दर्शनोपायश्च योगो धनुरा-

द्युपादानकल्पनयोक्तः । अथेदानीं तत्सहकारीणि सत्यादिसाधनानि वक्तव्यानीति तदर्थं उत्तरग्रन्थारम्भः । प्राधान्येन तत्त्वनिर्धारणं च प्रकारान्तरेण क्रियते । अत्यन्तदुरवगाह्यत्वात्कृतमपि तत्र सूत्रभूतो मन्त्रः परमार्थवस्त्ववधारणार्थमुपन्यस्यते—

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥१॥**

द्वा द्वौ सुपर्णा सुपर्णौ शोभनपतनौ सुपर्णौ, पक्षिसामान्याद्वा सुपर्णौ, सयुजा सयुजौ सहैव सर्वदा युक्तौ, सखाया सखायौ समानाख्यानौ समानाभिव्यक्तिकारणौ, एवम्भूतौ सन्तौ समानं अविशेषमुपलब्ध्यधिष्ठानतया, एकं वृक्षं वृक्षमिवोच्छेदनसामान्याच्छरीरं वृक्षं परिषस्वजाते परिष्वक्तवन्तौ । सुपर्णाविवैकं वृक्षं फलोपभोगार्थम् । अयं हि वृक्षः ऊर्ध्वमूलोऽवाक्शाखोऽश्वत्थोऽव्यक्तमूलप्रभवः क्षेत्रसञ्ज्ञकः सर्वप्राणिकर्मफलाश्रयः, तं परिष्वक्तवन्तौ सुपर्णाविव अविद्याकामकर्मवासनाश्रयलिङ्गोपाध्यात्मेश्वरौ । तयोः परिष्वक्तयोरन्य एकः क्षेत्रज्ञो लिङ्गोपाधिवृक्षमाश्रितः पिप्पलं कर्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वादु अनेकविचित्रवेदनास्वादरूपं स्वाद्वत्ति भक्षयत्युपभुङ्क्तेऽविवेकतः । अनश्नन्नन्य इतर ईश्वरो नित्यशुद्धबुद्धमुक्तस्वभावः सर्वज्ञः सर्वसत्त्वोपाधिरीश्वरो नाश्नाति । प्रेरयिता ह्यसौ उभयोर्भोज्यभोक्त्रोः नित्यसाक्षित्वसत्तामात्रेण । स त्वनश्नन्नन्योऽभिचाकशीति पश्यत्येव केवलम् । दर्शनमात्रं हि तस्य प्रेरयितृत्वं राजवत् ॥ १ ॥

**समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।**
**जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥२॥**

तत्रैवं सति समाने वृक्षे यथोक्ते शरीरे पुरुषो भोक्ता जीवो अविद्याकामकर्मफलरागादिगुरुभाराक्रान्तो अलाबुरिव सामुद्रे जले निमग्नो निश्चयेन देहात्मभावमापन्नोऽयमेवाहममुष्य पुत्रोऽस्य नप्ता कृशः स्थूलो गुणवान्निर्गुणः सुखी दुःखीत्येवम्प्रत्ययो नास्त्यन्योऽस्मादिति जायते म्रियते संयुज्यते वियुज्यते च सम्बन्धिबान्धवैः । अतोऽनीशया, न कस्यचित्समर्थोऽहं पुत्रो मम विनष्टो मृता मे भार्या किं मे जीवितेन इत्येवं दीनभावोऽनीशा, तया शोचति सन्तप्यते मुह्यमानोऽनेकैरनर्थ-

प्रकारैरविवेकतया चिन्तामापद्यमानः स एवं प्रेततिर्यङ्मनुष्यादियोनिष्वाजवं(१) जवीभाव(२)मापन्नः कदाचिदनेकजन्मसु शुद्धधर्मसञ्चितनिमित्ततः केनचित्परमकारुणिकेन दर्शितयोगमार्गः अहिंसासत्यब्रह्मचर्यसर्वत्यागशमदमादिसम्पन्नः समाहितात्मा सन् जुष्टं सेवितमनेकैर्योगमार्गैः कर्मिभिश्च यदा यस्मिन्काले पश्यति ध्यायमानोऽन्यं वृक्षोपाधिलक्षणाद्विलक्षणमीशं असंसारिणं अशनायापिपासाशोकमोहजरामृत्य्वतीतमीशं सर्वस्य जगतोऽयमहमस्म्यात्मा सर्वस्य समः सर्वभूतस्थो नेतरो अविद्याजनितोपाधिपरिच्छिन्नो मायात्मेति विभूतिं महिमानं च जगद्रूपमस्यैव मम परमेश्वरस्येति यदैवं द्रष्टा, तदा वीतशोको भवति सर्वस्माच्छोकसागराद्विप्रमुच्यते, कृतकृत्यो भवतीत्यर्थः ॥ २ ॥

**यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।**
**तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥३॥**

अन्योऽपि मन्त्र इममेवार्थमाह सविस्तरम् । यदा यस्मिन्काले पश्यः पश्यतीति विद्वान्साधक इत्यर्थः । पश्यते पश्यति पूर्ववत् रुक्मवर्णं स्वयञ्ज्योतिःस्वभावं रुक्मस्येव वा ज्योतिरस्याविनाशि । कर्तारं सर्वस्य जगतः ईशं पुरुषं ब्रह्मयोनिं ब्रह्म च तद्योनिश्चासौ ब्रह्मयोनिस्तं ब्रह्मयोनिं, ब्रह्मणो वाऽपरस्य योनिं स यदा चैवं पश्यति, तदा स विद्वान्पश्यः पुण्यपापे बन्धनभूते कर्मणी समूले विधूय निरस्य दग्ध्वा निरञ्जनो निर्लेपो विगतक्लेशः परमं प्रकृष्टं निरतिशयं साम्यं समतामद्वयलक्षणं, द्वैतविषयाणि साम्यान्यतोऽर्वाञ्च्येव अतोऽद्वयलक्षणमेतत्परमं साम्यमुपैति प्रतिपद्यते ॥ ३ ॥

**प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन्विद्वान्भवते नातिवादी ।**
**आत्मक्रीड आत्मरतिः(३)क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥**

---

(१) अनवरतमित्यर्थः । (२) जवीभावम्–निकृष्टभावं लक्षणया जनुभावं कर्मवायुप्रेरितत्वया जराभावं क्षेप्यमाणत्वेनः पूर्ववदित्यभेदेनेत्यर्थः ॥

(३) आत्मरतिः–आत्मनि रतिरात्मरतिरात्मपुरुषः सैव क्रिया यस्यासौ स्यात्मरतिक्रियावानिति मनुर्वेदकः प्रणोयते कथमुक्त बहुव्रीहिम पूर्वपदस्यान्यतरोऽतिरिच्यत इति । सरत्नसमासपाठे द्वयोरर्थवत्समासीन । समासपाठे त्वन्यतरो मनुवतिरिच्यते विशेष्यते बाह्यक्रियानिवृत्तिरुक्तमादित्यर्थः ॥

मिमं योगं मन्यमाना भयं कुर्वन्ति, अभयेऽस्मिन्भयदर्शिनो, भयनिमित्तात्मनाशदर्शनशीला अविवेकिनः इत्यर्थः ॥ ३९ ॥

**मनसो निग्रहायत्तमभयं सर्वयोगिनाम्।**
**दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च ॥ ४० ॥**

येषां पुनर्ब्रह्मस्वरूपव्यतिरेकेण रज्जुसर्पवत्कल्पितमेव मनः इन्द्रियादि च न परमार्थतो विद्यते, तेषां ब्रह्मस्वरूपाणामभयं मोक्षाख्या चाक्षया शान्तिः स्वभावत एव सिद्धा, नान्यायत्ता। "नोपचारः कथञ्चन" इत्यवोचाम। ये त्वतोऽन्ये योगिनो मार्गगा हीनमध्यमदृष्टयो मनोऽन्यदात्मव्यतिरिक्तमात्मसम्बन्धि पश्यन्ति, तेषामात्मसत्यानुबोधरहितानां मनसो निग्रहायत्तमभयं सर्वेषां योगिनाम्। किञ्च दुःखक्षयोऽपि। न ह्यात्मसम्बन्धिनि मनसि प्रचलिते दुःखक्षयोऽस्त्यविवेकिनाम्। किञ्च आत्मप्रबोधोऽपि मनोनिग्रहायत्त एव। तथा अक्षयापि मोक्षाख्या शान्तिस्तेषां मनोनिग्रहायत्तैव ॥ ४० ॥

**उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना।**
**मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥ ४१ ॥**

मनोनिग्रहोऽपि तेषामुदधेः कुशाग्रेणैकबिन्दुना उत्सेचनेन शोषणव्यवसायवत् व्यवसायवतां अनवसन्नान्तःकरणानां अनिर्वेदादपरिखेदतो भवतीत्यर्थः ॥ ४१ ॥

**उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः।**
**सुप्रसन्नं लये चैव यथा कामो लयस्तथा ॥ ४२ ॥**

किं अपरिखिन्नव्यवसायमात्रमेव मनोनिग्रहे उपायः? नेत्युच्यते। अपरिखिन्नव्यवसायवान्सन् वक्ष्यमाणेनोपायेन कामभोगविषयेषु विक्षिप्तं मनो निगृह्णीयान्निरुन्ध्यादात्मन्येवेत्यर्थः। किञ्च, लीयतेऽस्मिन्निति सुषुप्तो लयः। तस्मिंल्लये च सुप्रसन्नं आयासवर्जितमपीत्येतत् निगृह्णीयादित्यनुवर्तते। सुप्रसन्नं चेत्कस्मान्निगृह्यत इति। उच्यते—यस्माद्यथा कामोऽनर्थहेतुस्तथा लयोऽपि। अतः कामविषयस्य मनसो निग्रहवल्लयादपि निरोद्धव्यमित्यर्थः ॥ ४२

**दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत्।**
**अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥ ४३ ॥**

कः स उपाय इति । उच्यते—सर्वं द्वैतमविद्याविजृम्भितं दुःखमेवेत्यनुस्मृत्य कामभोगात्, कामनिमित्तो भोगः इच्छाविषयस्तस्मात्, विप्रसृतं मनो निवर्तयेद्वैराग्यभावनयेत्यर्थः । अजं ब्रह्म सर्वं इत्येतच्छास्त्राचार्योपदेशतोऽनुस्मृत्य तद्विपरीतं द्वैतजातं नैव तु पश्यति । अभावात् ॥ ४३ ॥

**लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ।**
**सकषायं विजानीयात्समप्राप्तं न चालयेत् ॥ ४४ ॥**

एवमनेन ज्ञानाभ्यासवैराग्यद्वयोपायेन लये सुषुप्ते लीनं सम्बोधयेन्मनः । आत्मविवेकदर्शनेन योजयेत् । चित्तं मन इत्यनर्थान्तरम् । विक्षिप्तं च कामभोगेषु शमयेत्पुनः । एवं पुनः पुनरभ्यस्यतो लयात्सम्बोधितं विषयेभ्यश्च व्यावर्तितं, नापि साम्यापन्नमन्तरालावस्थं सकषायं सरागं बीजसंयुक्तं मन इति विजानीयात् । ततोऽपि यत्नतः साम्यमापादयेत् । यदा तु समप्राप्तं भवति, समप्राप्त्यभिमुखीभवतीत्यर्थः । ततस्तन्न चालयेद्विषयाभिमुखं न कुर्यादित्यर्थः ॥ ४४ ॥

**नास्वादयेत्सुखं तत्र निःसङ्गः प्रज्ञया भवेत् ।**
**निश्चलं निश्चरच्चित्तमेकीकुर्यात्प्रयत्नतः ॥ ४५ ॥**

समाधित्सतो योगिनो यत्सुखं जायते तन्नास्वादयेत् । तत्र न रज्येतेत्यर्थः । कथं तर्हि ? निःसङ्गो निस्पृहः प्रज्ञया विवेकबुद्ध्या यदुपलभ्यते सुखं, तदविद्यापरिकल्पितं मृषैवेति विभावयेत् । ततोऽपि सुखरागान्निगृह्णीयादित्यर्थः । यदा पुनः सुखरागान्निवृत्तं निश्चलस्वभावं सन्निश्चरद्बहिर्निर्गच्छद्भवति चित्तं, ततस्ततो नियम्योक्तोपायेन आत्मन्येवैकीकुर्यात्प्रयत्नतः । चित्स्वरूपसत्तामात्रमेव आपादयेदित्यर्थः ॥ ४५ ॥

**यदा न लीयते चित्तं न च विक्षिप्यते पुनः ।**
**अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥ ४६ ॥**

यथोक्तेनोपायेन निगृहीतं चित्तं यदा सुषुप्ते न लीयते, न च पुनर्विषयेषु विक्षिप्यते । अनिङ्गनमचलं निवातप्रदीपकल्पम् । अनाभासं न केनचित्कल्पितेन विषयभावेनावभासत इति । यदैवंलक्षणं चित्तं, तदा निष्पन्नं ब्रह्म । ब्रह्मस्वरूपेण निष्पन्नं चित्तं भवतीत्यर्थः ॥ ४६ ॥

स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम् ।
अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते ॥ ४७ ॥

यथोक्तं परमार्थसुखमात्मसत्यानुबोधलक्षणं स्वस्थं स्वात्मनि स्थितम् । शान्तं सर्वानर्थोपशमरूपम् । सनिर्वाणं, निर्वृतिर्निर्वाणं कैवल्यं, सह निर्वाणेन वर्तते । तच्चाकथ्यं न शक्यते कथयितुम् । अत्यन्तासाधारणविषयत्वात् । सुखमुत्तमं निरतिशयं हि तद्योगिप्रत्यक्षमेव । न जातमित्यजं, यथा विषयविषयम् । अजेनानुत्पन्नेन ज्ञेयेनाव्यतिरिक्तं सत्त्वेन सर्वज्ञरूपेण सर्वज्ञं ब्रह्मैव सुखं परिचक्षते कथयन्ति ब्रह्मविदः ॥ ४७ ॥

न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते ।
एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते ॥ ४८ ॥

इति अद्वैताख्यं तृतीयं प्रकरणम् ।

सर्वोऽप्ययं मनोनिग्रहादिः मृल्लोहादिवत्सृष्टिरुपासना चोक्ता परमार्थस्वरूपप्रतिपत्त्युपायत्वेन, न परमार्थसत्येति । परमार्थसत्यं तु न कश्चिज्जायते जीवः कर्ता भोक्ता च नोत्पद्यते केनचिदपि प्रकारेण । अतः स्वभावतोऽजस्यास्य एकस्यात्मनः सम्भवः कारणं न विद्यते नास्ति । यस्मान्न विद्यतेऽस्य कारणं, तस्मान्न कश्चिज्जायते जीव इत्येतत् । पूर्वेषु उपायत्वेनोक्तानां सत्यानामेतदुत्तमं सत्यं यस्मिन्सत्यस्वरूपे ब्रह्मणि अणुमात्रमपि किञ्चिन्न जायत इति ॥ ४८ ॥

इति तृतीयं अद्वैतप्रकरणम् ।

---

अलातशान्तिप्रकरणम् ॥ ४ ॥

ज्ञानेनाकाशकल्पेन धर्मान्यो गगनोपमान् ।
ज्ञेयाभिन्नेन सम्बुद्धस्तं वन्दे द्विपदां वरम् ॥ १ ॥

ओङ्कारनिर्णयद्वारेण आगमतः प्रतिज्ञातस्याद्वैतस्य बाह्यविषयभेदवैतथ्याच्च सिद्धस्य पुनरद्वैते शास्त्रयुक्तिभ्यां साक्षान्निर्धारितस्य एतदुत्तमं सत्यमित्युपसंहारः कृतः अन्ते । तस्यैतस्यागमार्थस्य अद्वैतदर्शनस्य प्रतिपक्षभूता द्वैतिनो वैना-

शिकाश्च । तेषां चान्योन्यविरोधात् रागद्वेषादिक्लेशास्पदं दर्शनमिति मिथ्यादर्शनत्वं सूचितम् । क्लेशानास्पदत्वात् सम्यग्दर्शनं इत्यद्वैतदर्शनं स्तूयते । तदिह विस्तरेण अन्योन्यविरुद्धतया असम्यग्दर्शनत्वं प्रदर्श्य तत्प्रतिषेधेन अद्वैतदर्शनसिद्धिरुप-संहर्तव्या आवीतन्यायेन इति अलातशान्तिप्रकरणमारभ्यते । तत्राद्वैतदर्शनसम्प्र-दायकर्तुः अद्वैतस्वरूपेणैव नमस्कारार्थोऽयमाद्यश्लोकः । आचार्यपूजा ह्यभिप्रेतार्थ-सिद्धयर्था इष्यते शास्त्रारम्भे । आकाशेन ईषदसमाप्तं आकाशकल्पं आकाशतुल्य-मेतत् । तेन आकाशकल्पेन ज्ञानेन । किम् ? धर्मानात्मनः । किंविशिष्टान् ? गगनोपमान् गगनमुपमा येषां ते गगनोपमास्तानात्मनो धर्मान् । ज्ञानस्यैव पुनः विशेषणम्—ज्ञेयैर्धर्मैरात्मभिरभिन्नं अग्न्युष्णवत्सवितृप्रकाशवच्च यत् ज्ञानं तेन ज्ञेयाभिन्नेन ज्ञानेन आकाशकल्पेन ज्ञेयात्मस्वरूपाव्यतिरिक्तेन, गगनोपमान्धर्मान्यः सम्बुद्धः सम्बुद्धवानित्ययमीश्वरो यो नारायणाख्यस्तं वन्देऽभिवादये । द्विपदां वरं द्विपदोपलक्षितानां पुरुषाणां वरं प्रधानं, पुरुषोत्तममित्यभिप्रायः । उपदेष्टृनमस्कार-मुखेन ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वदर्शनमिह प्रकरणे प्रतिपिपादयिषितं प्रतिपक्षप्रतिषेधद्वारेण प्रतिज्ञातं भवति ॥ १ ॥

**अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः ।**
**अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहम् ॥ २ ॥**

अधुना अद्वैतदर्शनयोगस्य नमस्कारः तत्स्तुतये । स्पर्शनं स्पर्शः सम्बन्धो न विद्यते यस्य योगस्य केनचित्कदाचिदपि, सोऽस्पर्शयोगो ब्रह्मस्वभाव एव, वै नामेति । ब्रह्मविदामस्पर्शयोग इत्येवं प्रसिद्ध इत्यर्थः । स च सर्वसत्त्वसुखो भवति । कश्चिदत्यन्तसुखसाधनविशिष्टोऽपि दुःखरूपः, यथा तपः । अयं तु न तथा । किं तर्हि ? सर्वसत्त्वानां सुखः । तथेह भवति कश्चिद्विषयोपभोगः सुखो न हितः । अयं तु सुखो हितश्च । नित्यमप्रचलितस्वभावत्वात् किं चावि-वादो, विरुद्धं वदनं विवादः पक्षप्रतिपक्षपरिग्रहेण यस्मिन्न विद्यते सोऽविवादः । कस्मात् ? यतोऽविरुद्धश्च । य ईदृशो योगो देशितः उपदिष्टः शास्त्रेण, तं नमा-म्यहं प्रणमामीत्यर्थः ॥ २ ॥

**भूतस्य जातिमिच्छन्ति वादिनः केचिदेव हि ।**
**अभूतस्यापरे धीरा विवदन्तः परस्परम् ॥ ३ ॥**

कथं द्वैतिनः परस्परं विरुध्यन्त इति । उच्यते—भूतस्य विद्यमानस्य वस्तुनो जातिमुत्पत्तिमिच्छन्ति वादिनः केचिदेव हि साङ्ख्याः । न सर्वे एव द्वैतिनः । यस्मादभूतस्याविद्यमानस्यापरे वैशेषिका नैयायिकाश्च धीरा धीमन्तः प्राज्ञाभिमानिन इत्यर्थः । विवदन्तो विरुद्धं वदन्तो हि अन्योन्यमिच्छन्ति जेतुमित्यभिप्रायः ॥ ३ ॥

**भूतं न जायते किञ्चिदभूतं नैव जायते ।**
**विवदन्तोऽद्वया ह्येवमजातिं ख्यापयन्ति ते ॥ ४ ॥**

तैरेवं विरुद्धवदनेन अन्योन्यपक्षप्रतिषेधं कुर्वद्भिः किं ख्यापितं भवतीति । उच्यते—भूतं विद्यमानं वस्तु न जायते किञ्चिद्विद्यमानत्वादेव आत्मवदित्येवं वदन्नसद्वादी साङ्ख्यपक्षं प्रतिषेधति सज्जन्म । तथा अभूतमविद्यमानं अविद्यमानत्वान्नैव जायते शशविषाणवदित्येवं वदन्साङ्ख्योऽपि असद्वादिपक्षं असज्जन्म प्रतिषेधति । विवदन्तो विरुद्धं वदन्तो अद्वया अद्वैतिनोऽप्येते अन्योन्यस्य पक्षौ सदसतोर्जन्मनी प्रतिषेधन्तोऽजातिमनुत्पत्तिमर्थात्ख्यापयन्ति प्रकाशयन्ति ते ॥ ४ ॥

**ख्याप्यमानामजातिं तैरनुमोदामहे वयम् ।**
**विवदामो न तैः सार्धमविवादं निबोधत ॥ ५ ॥**

तैरेवं ख्याप्यमानां अजातिं एवमस्त्वित्यनुमोदामहे केवलं, न तैः सार्धं विवदामः पक्षप्रतिपक्षग्रहणेन । यथा तेऽन्योन्यमित्यभिप्रायः । अतः तमविवादं विवादरहितं परमार्थदर्शनमनुज्ञातं अस्माभिर्निबोधत हे शिष्याः ॥ ५ ॥

**अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिनः ।**
**अजातो ह्यमृतो धर्मो मर्त्यतां कथमेष्यति ॥ ६ ॥**

सदसद्वादिनः सर्वेऽपीति । पुरस्तात्कृतभाष्यः श्लोकः ॥ ६ ॥

**न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।**
**प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥ ७ ॥**
**स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम् ।**
**कृतकेनामृतस्तस्य कृतं स्थास्यति निश्चलः ॥ ८ ॥**

उक्तार्थानां श्लोकानां इहोपन्यासः परवादिपक्षाणां अन्योन्यविरोधाख्यापितानुमोदनप्रदर्शनार्थः ॥ ७-८ ॥

**सांसिद्धिकी स्वाभाविकी सहजा अकृता च या ।**
**प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ॥ ९ ॥**

यस्माल्लौकिक्यपि प्रकृतिर्न विपर्येति, काऽसावित्याह— सम्यक्सिद्धिः संसिद्धिस्तत्र भवा सांसिद्धिकी । यथा योगिनां सिद्धानामणिमाद्यैश्वर्यप्राप्तिः प्रकृतिः सा भूतभविष्यत्कालयोरपि योगिनां न विपर्येति, तथैव सा । तथा स्वाभाविकी द्रव्यस्वभावत एव सिद्धा, यथाऽग्न्यादीनां उष्णप्रकाशादिलक्षणा । सापि न कालान्तरे व्यभिचरति देशान्तरे वा । तथा सहजा आत्मना सहैव जाता यथा पक्ष्यादीनामाकाशगमनादिलक्षणा । अन्याऽपि या काचिदकृता केनचिन्न कृता, यथापां निम्नदेशगमनादिलक्षणा । अन्यापि या काचित्स्वभावं न जहाति सा सर्वा प्रकृतिरिति विज्ञेया लोके । मिथ्याकल्पितेषु लौकिकेष्वपि वस्तुषु प्रकृतिर्नान्यथा भवति । किमुताजस्वभावेषु परमार्थवस्तुषु ? अमृतत्वलक्षणा प्रकृतिर्नान्यथा भवतीत्यभिप्रायः ॥ ९ ॥

**जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः ।**
**जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया ॥ १० ॥**

किंविषया पुनः सा प्रकृतिर्यस्या अन्यथाभावो वादिभिः कल्प्यते ? कल्पनायां वा को दोषः ? इत्याह —जरामरणनिर्मुक्ताः । जरामरणादिसर्वविक्रियावर्जिता इत्यर्थः । के ? सर्वे धर्माः सर्व आत्मान इत्येतत्स्वभावतः प्रकृतितः एव । अतः एवंस्वभावाः सन्तो धर्मा जरामरणमिच्छन्त इच्छन्त इवेच्छन्तो रज्ज्वामिव सर्पमात्मनि कल्पयन्तश्च्यवन्ते स्वभावतश्चलन्तीत्यर्थः । तन्मनीषया जन्ममरणचिन्तया तद्भावभावितत्वदोषेणेत्यर्थः ॥ १० ॥

**कारणं यस्य वै कार्यं कारणं तस्य जायते ।**
**जायमानं कथमजं भिन्नं नित्यं कथं च तत् ॥ ११ ॥**

कथं सत्कार्यवादिभिः साङ्ख्यैरनुपपन्नमुच्यत इत्याह वैशेषिकः । कारणं मृद्वदुपादानलक्षणं यस्य वादिनो वै कार्यं, कारणमेव कार्याकारेण परिणमते

यस्य वादिन इत्यर्थः। तस्माजमेव सत्प्रधानादि कारणं महदादि कार्यरूपेण जायत इत्यर्थः। महदाद्याकारेण चेज्जायमानं प्रधानं कथमजमुच्यते तैः? विप्रतिषिद्धं चेदं जायतेऽजं चेति। नित्यं च तैरुच्यते। प्रधानं भिन्नं विदीर्णं स्फुटितमेकदेशेन सत्कथं नित्यं भवेदित्यर्थः। न हि सावयवं घटादि एकदेशस्फुटनधर्मि नित्यं दृष्टं लोके इत्यर्थः। विदीर्णं च स्यादेकदेशेनाजं नित्यं च, इति एतद्विप्रतिषिद्धं तैरभिधीयत इत्यभिप्रायः॥ ११॥

**कारणाद्यद्यनन्यत्वमतः कार्यमजं तव।**
**जायमानाद्धि वै कार्यात्कारणं ते कथं ध्रुवम्॥ १२॥**

उक्तस्यैवार्थस्य स्पष्टीकरणार्थमाह—कारणादजात्कार्यस्य यदि अनन्यत्वमिष्टं त्वया, ततः कार्यमप्यजमिति प्राप्तम्। इदं चान्यद्विप्रतिषिद्धं कार्यमजं चेति तव। किं चान्यत्, कार्यकारणयोरनन्यत्वे जायमानाद्धि वै कार्यात्कारणमनन्यन्नित्यं ध्रुवं च ते कथं भवेत्? न हि कुक्कुट्या एकदेशः पच्यत, एकदेशः प्रसवाय कल्प्यते॥ १२॥

**अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै।**
**जाताच्च जायमानस्य न व्यवस्था प्रसज्यते॥ १३॥**

किं चान्यत्, यदजादनुत्पन्नाद्वस्तुनो जायते यस्य वादिनः कार्यं, दृष्टान्तस्तस्य नास्ति वै। दृष्टान्ताभावेऽर्थादजान्न किञ्चिज्जायते इति सिद्धं भवतीत्यर्थः। यदा पुनर्जाताज्जायमानस्य वस्तुनोऽभ्युपगमः, तदप्यन्यस्माज्जातात्तदप्यन्यस्मादिति न व्यवस्था प्रसज्येत। अनवस्था स्यादित्यर्थः॥ १३॥

**हेतोरादिः फलं येषामादिर्हेतुः फलस्य च।**
**हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते॥ १४॥**

'यत्र त्वस्य सर्वमात्मैवाभूत्' इति परमार्थतो द्वैताभावः श्रुत्योक्तः। तमाश्रित्याह—हेतोर्धर्माधर्मादेरादिः कारणं देहादिसङ्घातः फलं येषां वादिनाम्। तथा आदिः कारणम्। हेतुर्धर्माधर्मादिः। फलस्य च देहादिसङ्घातस्य। एवं हेतुफलयोरितरेतरकार्यकारणत्वेन आदिमत्त्वं ब्रुवद्भिः एवं हेतोः फलस्य चा-

नादित्वं कथं तैरुपवर्ण्यते विप्रतिषिद्धमित्यर्थः। न हि नित्यस्य कूटस्थस्यात्मना हेतुफलात्मकता सम्भवति ॥ १४ ॥

**हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ।**
**तथा जन्म भवेत्तेषां पुत्राज्जन्म पितुर्यथा ॥ १५ ॥**

कथं तैर्विरुद्धमभ्युपगम्यत इति। उच्यते। हेतुजन्यादेव फलाद्धेतोर्जन्माभ्युपगच्छतां तेषामीदृशो विरोध उक्तो भवति, यथा पुत्राज्जन्म पितुः ॥ १५ ॥

**सम्भवे हेतुफलयोरेषितव्यः क्रमस्त्वया ।**
**युगपत्सम्भवे यस्मादसम्बन्धो विषाणवत् ॥ १६ ॥**

यथोक्तो विरोधो न युक्तोऽभ्युपगन्तुमिति चेन्मन्यसे, सम्भवे उत्पत्तौ हेतुफलयोः क्रम एषितव्योऽन्वेष्टव्यस्त्वया, हेतुः पूर्वं पश्चात्फलं चेति। इतश्च युगपत्सम्भवे यस्माद्धेतुफलयोः कार्यकारणत्वेन असम्बन्धः। यथा युगपत्सम्भवतोः सव्येतरगोविषाणयोः ॥ १६ ॥

**फलादुत्पद्यमानः सन्न ते हेतुः प्रसिध्यति ।**
**अप्रसिद्धः कथं हेतुः फलमुत्पादयिष्यति ॥ १७ ॥**

कथमसम्बन्ध इत्याह — जन्यात्स्वतोऽलब्धात्मकात्फलादुत्पद्यमानः सञ्शशविषाणादेरिव असतो न हेतुः प्रसिध्यति जन्म न लभते। अलब्धात्मकोऽप्रसिद्धः सञ्शशविषाणादिकल्पस्तव स कथं फलमुत्पादयिष्यति ? न हि इतरेतरापेक्षसिद्धयोः शशविषाणकल्पयोः कार्यकारणभावेन सम्बन्धः क्वचित् दृष्टः, अन्यथा वा इत्यभिप्रायः ॥ १७ ॥

**यदि हेतोः फलात्सिद्धिः फलसिद्धिश्च हेतुतः ।**
**कतरत्पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया ॥ १८ ॥**

असम्बन्धतादोषेणापोदितेऽपि हेतुफलयोः कार्यकारणभावे, यदि हेतुफलयोः अन्योन्यसिद्धिरभ्युपगम्यत एव त्वया, कतरत्पूर्वं निष्पन्नं हेतुफलयोः ? यस्य पश्चाद्भाविनः सिद्धिः स्यात्पूर्वसिद्धयपेक्षया, तत् ब्रूहीत्यर्थः ॥ १८ ॥

**अशक्तिरपरिज्ञानं क्रमकोपोऽथ वा पुनः।**
**एवं हि सर्वथा बुद्धैरजातिः परिदीपिता ॥ १९ ॥**

अथैतन्न शक्यते वक्तुमिति मन्यसे, सेयमशक्तिरपरिज्ञानं तत्त्वाविवेको, मूढतेत्यर्थः। अथवा योऽयं त्वयोक्तः क्रमो हेतोः फलस्य सिद्धिः फलाच्च हेतोः सिद्धिरिति, इतरेतरानन्तर्यलक्षणः, तस्य कोपो विपर्यासोऽन्यथाभावः स्यादित्यभिप्रायः। एवं हेतुफलयोः कार्यकारणभावानुपपत्तेः अजातिः सर्वस्यानुत्पत्तिः परिदीपिता प्रकाशिता अन्योन्यपक्षदोषं ब्रुवद्भिर्वादिभिः बुद्धैः पण्डितैरित्यर्थः ॥१९॥

**बीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः।**
**न हि साध्यसमो हेतुः सिद्धौ साध्यस्य युज्यते ॥ २० ॥**

ननु हेतुफलयोः कार्यकारणभावः इत्यस्माभिरुक्तं शब्दमात्रमाश्रित्य च्छलमिदं त्वयोक्तं, पुत्राज्जन्म पितुर्यथा, विषाणवच्चासम्बन्ध, इत्यादि। न ह्यस्माभिरसिद्धाद्धेतोः फलसिद्धिः, असिद्धाद्वा फलाद्धेतुसिद्धिरभ्युपगता। किं तर्हि? बीजाङ्कुरवत्कार्यकारणभावोऽभ्युपगम्यत इति। अत्रोच्यते—बीजाङ्कुराख्यो दृष्टान्तो यः स साध्येन समः तुल्यो ममेत्यभिप्रायः। ननु प्रत्यक्षः कार्यकारणभावो बीजाङ्कुरयोरनादि। न पूर्वस्य पूर्वस्यापरभावादादिमत्त्वाभ्युपगमात्। यथा इदानीमुत्पन्नोऽपरोऽङ्कुरो बीजादादिमान्बीजं चापरमन्यस्मादङ्कुरादिति क्रमेणोत्पन्नत्वादादिमत्। एवं पूर्वः पूर्वोऽङ्कुरो बीजं च पूर्वं पूर्वमादिमदेवेति प्रत्येकं सर्वस्य बीजाङ्कुरजातस्य आदिमत्त्वात्कस्यचिदप्यनादित्वानुपपत्तिः। एवं हेतुफलयोः। अथ बीजाङ्कुरसन्ततेरनादिमत्त्वमिति चेत्। न। एकत्वानुपपत्तेः। न हि बीजाङ्कुरव्यतिरेकेण बीजाङ्कुरसन्ततिर्नामैकाऽभ्युपगम्यते हेतुफलसन्ततिर्वा तदनादित्ववादिभिः। तस्मात्सूक्तं "हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते" इति। तथा च अन्यदप्यनुपपत्तेर्न च्छलमित्यभिप्रायः। न च लोके साध्यसमो हेतुः साध्यस्य सिद्धौ सिद्धिनिमित्तं युज्यते प्रयुज्यते प्रमाणकुशलैरित्यर्थः। हेतुरिति दृष्टान्तोऽत्राभिप्रेतो गमकत्वात्। प्रकृतो हि दृष्टान्तो न हेतुरिति ॥ २० ॥

**पूर्वापरापरिज्ञानमजातेः परिदीपकम्।**
**जायमानाद्धि वै धर्मात्कथं पूर्वं न गृह्यते ॥ २१ ॥**

कथं बुद्धेरजातिः परिदीपितेत्याह — यत्तद्धेतुफलयोः पूर्वापरापरिज्ञानं, तच्चैतदजातेः परिदीपकमवबोधकमित्यर्थः । जायमानो हि चेद् धर्मो गृह्यते, कथं तस्मात्पूर्वं कारणं न गृह्यते ? अवश्यं हि जायमानस्य ग्रहीत्रा तज्जनकं ग्रहीतव्यम् । जन्यजनकयोः सम्बन्धस्यानपेतत्वात् । तस्मादजातिपरिदीपकं तदित्यर्थः ॥ २१ ॥

**स्वतो वा परतो वापि न किञ्चिद्वस्तु जायते ।**
**सदसत्सदसद्वापि न किञ्चिद्वस्तु जायते ॥ २२ ॥**

इतश्च न जायते किञ्चित् । यज्जायमानं वस्तु स्वतः परतः उभयतो वा सदसत्सदसद्वा न जायते, न तस्य केनचिदपि प्रकारेण जन्म सम्भवति । न तावत्स्वयमेवापरिनिष्पन्नात्स्वतः स्वरूपात्स्वयमेव जायते, यथा घटस्तस्मादेव घटात् । नापि परतोऽन्यस्मादन्यो, यथा घटात्पटः पटात्पटान्तरम् । तथा नोभयतः । विरोधात् । यथा घटपटाभ्यां घटः पटो वा न जायते । ननु मृदो घटो जायते पितुश्च पुत्रः । सत्यम् । अस्ति जायत इति प्रत्ययः शब्दश्च मूढानाम् । तावेव तु शब्दप्रत्ययौ विवेकिभिः परीक्ष्येते—किं सत्यमेव तावुत मृषेति । यावता परीक्ष्यमाणे शब्दप्रत्ययविषयं वस्तु घटपुत्रादिलक्षणं शब्दमात्रमेव तत् । 'वाचारम्भणं' इति श्रुतेः । सच्चेन्न जायते, सत्त्वात् मृत्पित्रादिवत् । यद्यसत्, तथापि न जायते, असत्त्वादेव, शशविषाणादिवत् । अथ सदसत्, तथापि न जायते विरुद्धस्यैकस्यासम्भवात् । अतो न किञ्चिद्वस्तु जायत इति सिद्धम् । येषां पुनर्जनिरेव जायत इति क्रियाकारकफलैकत्वमभ्युपगम्यते क्षणिकत्वं च वस्तुनः, ते दूरत एव न्यायापेताः । इदमित्थमित्यवधारणक्षणान्तरानवस्थानात् अननुभूतस्य स्मृत्यनुपपत्तेश्च ॥ २२ ॥

**हेतुर्न जायतेऽनादेः फलं चापि स्वभावतः ।**
**आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते ॥ २३ ॥**

किञ्च हेतुफलयोः अनादित्वमभ्युपगच्छता त्वया बलाद्धेतुफलयोरजन्मैवाभ्युपगतं स्यात् । तत्कथम् ? अनादेरादिरहितात्फलाद्धेतुर्न जायते । न ह्यनुत्पन्नादनादेः फलाद्धेतोर्जन्मेष्यते त्वया । फलं च आदिरहितादनादेर्हेतोः अजा-

स्वभावत एव निर्निमित्तं जायत इति नाभ्युपगम्यते। तस्मादनादित्वमभ्युपगच्छता त्वया हेतुफलयोरजन्मैवाभ्युपगम्यते। यस्मादनादिः कारणं न विद्यते यस्य लोके, तस्य ह्यादिः पूर्वोक्ता जातिर्न विद्यते। कारणवत एव ह्यादिरभ्युपगम्यते नाकारणवतः॥ २३॥

**प्रज्ञप्तेः सनिमित्तत्वमन्यथा द्वयनाशतः।**
**सङ्क्लेशस्योपलब्धेश्च परतन्त्रास्तिता मता॥ २४॥**

उक्तस्यैवार्थस्य दृढीकरणचिकीर्षया पुनराक्षिपति – प्रज्ञानं प्रज्ञप्तिः शब्दादिप्रतीतिस्तस्याः सनिमित्तत्वम्। निमित्तं कारणं विषय इत्येतत्सनिमित्तत्वं सविषयत्वं स्वात्मव्यतिरिक्तविषयतेत्येतत् प्रतिजानीमहे। न हि निर्विषया प्रज्ञप्तिः शब्दादिप्रतीतिः स्यात्। तस्याः सनिमित्तत्वात्। अन्यथा निर्विषयत्वे शब्दस्पर्शनीलपीतलोहितादिप्रत्ययवैचित्र्यस्य द्वयस्य नाशतो नाशोऽभावः प्रसज्येतेत्यर्थः। न च प्रत्ययवैचित्र्यस्य द्वयस्याभावोऽस्ति, प्रत्यक्षत्वात्। अतः प्रत्ययवैचित्र्यस्य द्वयस्य दर्शनात्। परेषां तन्त्रं परतन्त्रमित्यन्यशास्त्रं, तस्य परतन्त्रस्य परतन्त्राश्रयस्य बाह्यार्थस्य प्रज्ञानव्यतिरिक्तस्यास्तिता मताऽभिप्रेता। न हि प्रज्ञप्तेः प्रकाशमात्रस्वरूपाया नीलपीतादिबाह्यालम्बनवैचित्र्यमन्तरेण स्वाभवभेदेन एतद्वैचित्र्यं सम्भवति। स्फटिकस्येव नीलाद्युपाध्याश्रयैर्विना वैचित्र्यं न घटत इत्यभिप्राय.। इतश्च परतन्त्राश्रयस्य बाह्यार्थस्य ज्ञानव्यतिरिक्तस्यास्तिता। सङ्क्लेशनं सङ्क्लेशो दुःखमित्यर्थः। उपलभ्यते हि अग्निदाहादिनिमित्तं दुःखम्। यद्यग्न्यादिबाह्यं दाहादिनिमित्तं विज्ञानव्यतिरिक्तं न स्यात्ततो दाहादिदुःखं नोपलभ्येत। उलभ्यते तु। अतस्तेन मन्यामहे अस्ति बाह्योऽर्थ इति। न हि विज्ञानमात्रे सङ्क्लेशो युक्तः। अन्यत्रादर्शनादित्यभिप्रायः॥ २४॥

**प्रज्ञप्तेः सनिमित्तत्वमिष्यते युक्तिदर्शनात्।**
**निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात्॥ २५॥**

अत्रोच्यते—बाढमेवं प्रज्ञप्तेः सनिमित्तत्वं द्वयसङ्क्लेशोपलब्धियुक्तिदर्शनादिष्यते त्वया। स्थिरीभव तावत्त्वं युक्तिदर्शनं वस्तुनस्तथात्वाभ्युपगमे कारणमित्यत्र। ब्रूहि किं तत इति। उच्यते—निमित्तस्य प्रज्ञप्त्यालम्बनाभिमतस्य

तत्र घटादेर्निमित्तत्वमनालम्बनत्वं वैचित्र्यहेतुत्वमिष्यतेऽस्माभिः । कथं? भूतदर्शनात् । परमार्थदर्शनादित्येतत् । न हि घटो यथाभूतमृद्रूपदर्शने सति तद्व्यतिरेकेणास्ति, यथाऽश्वान्महिषः । पटो वा तन्तुव्यतिरेकेण । तन्तवश्चांशुव्यतिरेकेण इत्येवमुत्तरोत्तरभूतदर्शने आ शब्दप्रत्ययनिरोधान्नैव निमित्तमुपलभामहे इत्यर्थः । अथवा अभूतदर्शनाद्बाह्यार्थस्यानिमित्तत्वमिष्यते, रज्ज्वादाविव सर्पादिरित्यर्थः । भ्रान्तिदर्शनविषयत्वाच्च निमित्तस्यानिमित्तत्वं भवेत् । तदभावेऽभावात् । न हि सुषुप्तसमाहितमुक्तानां भ्रान्तिदर्शनाभावे आत्मव्यतिरिक्तो बाह्योऽर्थ उपलभ्यते । न ह्युन्मत्तावगतं वस्तु अनुन्मत्तैरपि तथाभूतं गम्यते । एतेन द्वयदर्शनं संक्लेशोपलब्धिश्च प्रत्युक्ता ॥ २५ ॥

**चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च ।**
**अभूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक् ॥ २६ ॥**

यस्मान्नास्ति बाह्यं निमित्तं अतश्चित्तं न स्पृशत्यर्थं बाह्यालम्बनविषयम् । नाप्यर्थाभासं, चित्तत्वात्स्वप्नचित्तवत् । अभूतो हि जागरितेऽपि स्वप्नार्थवदेव बाह्यः शब्दाद्यर्थो यतः उक्तहेतुत्वाच्च । नाप्यर्थाभासश्चित्तात्पृथक् । चित्तमेव हि घटाद्यर्थवदवभासते यथा स्वप्ने ॥ २६ ॥

**निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु ।**
**अनिमित्तो विपर्यासः कथं तस्य भविष्यति ॥ २७ ॥**

ननु विपर्यासस्तर्ह्यसति घटादौ घटाद्याभासता चित्तस्य । तथा च सति अविपर्यासः क्वचिद्वक्तव्य इति । अत्रोच्यते––निमित्तं विषयं अतीतानागतवर्तमानाध्वसु त्रिष्वपि सदा चित्तं न संस्पृशेदेव हि । यदि हि क्वचित्संस्पृशेत्सोऽविपर्यासः परमार्थत इति । अतस्तदपेक्षयाऽसति घटे घटाभासता विपर्यासः स्यान्न तु तदस्ति कदाचिदपि चित्तस्यार्थसंस्पर्शनम् । तस्मादनिमित्तो विपर्यासः कथं तस्य चित्तस्य भविष्यति ? न कथंचिद्विपर्यासोऽस्तीत्यभिप्रायः । अयमेव हि स्वभावश्चित्तस्य, यदुतासति निमित्ते घटादौ तद्वदवभासनम् ॥ २७ ॥

**तस्मान्न जायते चित्तं चित्तदृश्यं न जायते ।**
**तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम् ॥ २८ ॥**

"प्रज्ञप्तेः सनिमित्तत्वं" इत्याद्येतदन्तं विज्ञानवादिनो बौद्धस्य वचनं बाह्यार्थवादिपक्षप्रतिषेधपरं आचार्येणानुमोदितम् । तदेव हेतुं कृत्वा तत्पक्षप्रतिषेधाय तदिदमुच्यते—तस्मादित्यादि । यस्मादसत्येव घटादौ घटाद्याभासता चित्तस्य विज्ञानवादिनाऽभ्युपगता, तदनुमोदितमस्माभिरपि भूतदर्शनात् । तस्मात्तस्यापि चित्तस्य जायमानाऽवभासता असत्येव जन्मनि युक्ता भवितुमित्यतो न जायते चित्तम् । यथा चित्तदृश्यं न जायतेऽतस्तस्य चित्तस्य ये जातिं पश्यन्ति विज्ञानवादिनः क्षणिकत्वदुःखित्वशून्यत्वानात्मत्वादि च, तेनैव चित्तेन चित्तस्वरूपं द्रष्टुमशक्यं पश्यन्तः खे वै पश्यन्ति ते पदं पक्ष्यादीनाम् । अत इतरेभ्योऽपि द्वैतिभ्योऽत्यन्तसाहसिका इत्यर्थः । येऽपि शून्यवादिनः पश्यन्त एव सर्वशून्यतां स्वदर्शनस्यापि शून्यतां प्रतिजानते ते ततोऽपि साहसिकतराः खं मुष्टिनापि जिघृक्षन्ति ॥ २८ ॥

**अजातं जायते यस्मादजातिः प्रकृतिस्ततः ।**
**प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥ २९ ॥**

उक्तैर्हेतुभिरजमेकं ब्रह्मेति सिद्धम् । यत्पुनरादौ प्रतिज्ञातं तत्फलोपसंहारार्थोऽयं श्लोकः । अजातं यच्चित्तं ब्रह्मैव जायत इति वादिभिः परिकल्प्यते, तदजातं जायते यस्मादजातिः प्रकृतिस्तस्य । ततस्तस्मादजातरूपायाः प्रकृतेः अन्यथाभावो जन्म न कथञ्चिद्भविष्यति ॥ २९ ॥

**अनादेरन्तवत्त्वं च संसारस्य न सेत्स्यति ।**
**अनन्तता चादिमतो मोक्षस्य न भविष्यति ॥ ३० ॥**

अयं चापर आत्मनः संसारमोक्षयोः परमार्थसद्भाववादिनां दोष उच्यते । अनादेः अतीतकोटिरहितस्य संसारस्यान्तवत्त्वं समाप्तिर्न सेत्स्यति युक्तितः सिद्धिं नोपयास्यति । न ह्यनादिः सन्नन्तवान्कश्चित्पदार्थो दृष्टो लोके । बीजाङ्कुरसम्बन्धनैरन्तर्यविच्छेदो दृष्ट इति चेत् । न । एकवस्त्वभावेनापोदितत्वात् । तथा अनन्ततापि विज्ञानप्राप्तिकालप्रभवस्य मोक्षस्य आदिमतो न भविष्यति । घटादिष्वदर्शनात् । घटादिविनाशवदवस्तुत्वाददोष इति चेत् । तथा

च मोक्षस्य परमार्थसद्भावप्रतिज्ञाहानिः असत्त्वादेव शशविषाणस्येव आदिमत्त्वाभावश्च ॥ ३० ॥

**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।**
**वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ ३१ ॥**
**सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ॥**
**तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ ३२ ॥**

वैतथ्ये कृतव्याख्यानौ श्लोकाविह संसारमोक्षाभावप्रसङ्गेन पठितौ ॥ ३१-३२॥

**सर्वे धर्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात् ।**
**संवृतेऽस्मिन्प्रदेशे वै भूतानां दर्शनं कुतः ॥ ३३ ॥**

"निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात्" इत्ययमर्थः प्रपञ्च्यत एतैः श्लोकैः ॥ ३३ ॥

**न युक्तं दर्शनं गत्वा कालस्यानियमाद्गतौ ।**
**प्रतिबुद्धश्च वै सर्वस्तस्मिन्देशे न विद्यते ॥ ३४ ॥**

जागरिते गत्यागमनकाले नियतो देशः प्रमाणतो यः तस्यानियमान्नियमस्याभावात्स्वप्ने न देशान्तरगमनमित्यर्थः ॥ ३४ ॥

**मित्राद्यैः सह सम्मन्त्र्य सम्बुद्धो न प्रपद्यते ।**
**गृहीतं चापि यत्किञ्चित्प्रतिबुद्धो न पश्यति ॥ ३५ ॥**

मित्राद्यैः सह सम्मन्त्र्य तदेव मन्त्रणं प्रतिबुद्धो न प्रपद्यते । गृहीतं च यत्किञ्चिद्धिरण्यादि न प्राप्नोति । ततश्च न देशान्तरं गच्छति स्वप्ने ॥ ३५ ॥

**स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात् ।**
**यथा कायस्तथा सर्वं चित्तदृश्यमवस्तुकम् ॥ ३६ ॥**

स्वप्ने चाटन्दृश्यते यः कायः, सोऽवस्तुकस्ततोऽन्यस्य स्वापदेशस्थस्य पृथक्कायान्तरस्य दर्शनात् । यथा स्वप्नदृश्यः कायोऽसंस्तथा सर्वं चित्तदृश्यमवस्तुकं जागरितेऽपि चित्तदृश्यत्वादित्यर्थः । स्वप्नसमत्वादसज्जागरितमपीति प्रकरणार्थः ॥ ३६ ॥

**ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न इष्यते ।**
**तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते ॥ ३७ ॥**

इतश्चासत्त्वं जाग्रद्वस्तुनो जागरितवज्जागरितस्येव ग्रहणात् ग्राह्यग्राहकरूपेण स्वप्नस्य, तज्जागरितं हेतुरस्य स्वप्नस्य स स्वप्नस्तद्धेतुर्जागरितकार्यमिष्यते । तद्धेतुत्वाज्जागरितकार्यत्वात्तस्यैव स्वप्नदृश एव सज्जागरितं, न त्वन्येषाम् । यथा स्वप्न इत्यभिप्रायः । यथा स्वप्नः स्वप्नदृश एव सन्साधारणविद्यमानवस्तुवदवभासते तथा तत्कारणत्वात्साधारणविद्यमानवस्तुवदवभासमानं, न तु साधारणं विद्यमानवस्तु स्वप्नवदेवेत्यभिप्रायः ॥ ३७ ॥

**उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम् ।**
**न च भूतादभूतस्य सम्भवोऽस्ति कथञ्चन ॥ ३८ ॥**

ननु स्वप्नकारणत्वेऽपि जागरितवस्तुनो न स्वप्नवदवस्तुत्वम् । अत्यन्तचलो हि स्वप्नो जागरितं तु स्थिरं लक्ष्यते । सत्यमेवमविवेकिनां स्यात् । विवेकिनां तु न कस्यचिद्वस्तुनः उत्पादः प्रसिद्धः । अतोऽप्रसिद्धत्वादुत्पादस्य आत्मैव सर्वमित्यजं सर्वमुदाहृतं वेदान्तेषु 'सबाह्याभ्यन्तरो ह्यजः' इति । यद्यपि मन्यसे जागरितात्सतोऽसत्स्वप्नो जायत इति, तदसत् । न भूताद्विद्यमानादभूतस्यासतः सम्भवोऽस्ति लोके । न ह्यसतः शशविषाणादेः सम्भवो दृष्टः कथञ्चिदपि ॥ ३८ ॥

**असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः ।**
**असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति ॥ ३९ ॥**

ननूक्तं त्वयैव स्वप्नो जागरितकार्यमिति । तत्कथमुत्पादोऽप्रसिद्ध इत्युच्यते ? शृणु तत्र यथा कार्यकारणभावोऽस्माभिरभिप्रेत इति । असदविद्यमानं रज्जुसर्पवद्विकल्पितं वस्तु जागरिते दृष्ट्वा तद्भावभावितस्तन्मयः स्वप्नेऽपि जागरितवद्ग्राह्यग्राहकरूपेण विकल्पयन्पश्यति, तथा असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यत्यविकल्पयन् । च-शब्दात् । तथा जागरितेऽपि दृष्ट्वा स्वप्ने न पश्यति कदाचिदित्यर्थः । तस्माज्जागरितं स्वप्नहेतुरित्युच्यते न तु परमार्थसदिति कृत्वा ॥ ३९ ॥

**नास्त्यसद्धेतुकमसत्सदसद्धेतुकं तथा ।**
**सच्च सद्धेतुकं नास्ति सद्धेतुकमसत्कुतः ॥ ४० ॥**

परमार्थतस्तु न कस्यचित्केनचिदपि प्रकारेण कार्यकारणभाव उपपद्यते । कथम् ? नास्त्यसद्धेतुकं असच्छशविषाणादि हेतुः कारणं यस्यासतः एव खकुसुमादेः, तदसद्धेतुकमसन्न विद्यते । तथा सदपि घटादिवस्तु असद्धेतुकं शशविषाणादिकार्यं नास्ति । तथा सच्च विद्यमानं घटादि वस्त्वन्तरकार्यं नास्ति । सत्कार्यमसत्कुत एव सम्भवति ? न चान्यः कार्यकारणभावः सम्भवति शक्यो वा कल्पयितुम् । अतो विवेकिनामसिद्ध एव कार्यकारणभावः कस्यचिदित्यभिप्रायः ॥ ४० ॥

**विपर्यासाद्यथा जाग्रदचिन्त्यान्भूतवत्स्पृशेत् ।**
**तथा स्वप्ने विपर्यासाद्धर्मांस्तत्रैव पश्यति ॥ ४१ ॥**

पुनरपि जाग्रत्स्वप्नयोरसतोरपि कार्यकारणभावाशङ्कामपनयन्नाह । विपर्यासादविवेकतो यथा जाग्रज्जागरितेऽचिन्त्यान्भावान् अशक्यचिन्तनीयान्रज्जुसर्पादीन्भूतवत्परमार्थवत्स्पृशेत् स्पृशन्निव विकल्पयेदित्यर्थः । कश्चिद्यथा, तथा स्वप्ने विपर्यासाद्धस्त्यादीन्धर्मान्पश्यन्निव विकल्पयति । तत्रैव पश्यति, न तु जागरितादुत्पद्यमानानित्यर्थः ॥ ४१ ॥

**उपलम्भात्समाचारादस्तिवस्तुत्ववादिनाम् ।**
**जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा ॥ ४२ ॥**

यापि बुद्धैरद्वैतवादिभिर्जातिर्देशितोपदिष्टा । उपलम्भनमुपलम्भस्तस्मादुपलब्धेरित्यर्थः । समाचाराद्वर्णाश्रमादिधर्मसमाचरणात् । ताभ्यां हेतुभ्यामस्तिवस्तुत्ववादिनां अस्ति वस्तुभाव इत्येवंवदनशीलानां दृढाग्रहवतां श्रद्दधानानां मन्दविवेकिनामर्थोपायत्वेन सा देशिता जातिः । तां गृह्णन्तु तावत् । वेदान्ताभ्यासिनां तु स्वयमेव अजाद्वयात्मविषयो विवेको भविष्यतीति । न तु परमार्थबुद्ध्या । ते हि श्रोत्रियाः स्थूलबुद्धित्वादजातेरजातिवस्तुनः सदा त्रस्यन्त्यात्मनाशं मन्यमाना अविवेकिन इत्यर्थः । "उपायः सोऽवताराय" इत्युक्तम् ॥ ४२ ॥

**अजातेस्त्रसतां तेषामुपलम्भाद्वियन्ति ये ।**
**जातिदोषा न सेत्स्यन्ति दोषोऽप्यल्पो भविष्यति॥४३॥**

न चैवमुपलम्भात्समाचाराच्च अजातेरजातिवस्तुनः त्रसन्तोऽस्ति वस्त्वित्यद्वयादात्मनो, वियन्ति विरुद्धं यन्ति द्वैतं प्रतिपद्यन्ते इत्यर्थः । तेषामजातेस्त्रसतां श्रद्दधानानां सन्मार्गावलम्बिनां जातिदोषा जात्युपलम्भकृता दोषा न सेत्स्यन्ति सिद्धिं नोपयास्यन्ति । विवेकमार्गप्रवृत्तत्वात् । यद्यपि कश्चिद्दोषः स्यात् सोऽप्यल्प एव भविष्यति । सम्यग्दर्शनाप्रतिपत्तिहेतुक इत्यर्थः ॥ ४३ ॥

**उपलम्भात्समाचारान्मायाहस्ती यथोच्यते ।**
**उपलम्भात्समाचारादस्ति वस्तु तथोच्यते ॥ ४४ ॥**

ननु उपलम्भसमाचारयोः प्रमाणत्वादस्त्येव द्वैतं वस्त्विति । न । उपलम्भसमाचारयोर्व्यभिचारात् । कथं व्यभिचार इत्युच्यते । उपलभ्यते हि मायाहस्ती हस्तीव, हस्तिनमिवात्र समाचरन्ति बन्धनारोहणादिहस्तिसम्बन्धिभिर्धर्मैः । हस्तीति चोच्यतेऽसन्नपि यथा तथैवोपलम्भात्समाचारात् द्वैतं भेदरूपमस्ति वस्त्वित्युच्यते । तस्मान्नोपलम्भसमाचारौ द्वैतवस्तुसद्भावे हेतू भवत इत्यभिप्रायः ॥ ४४ ॥

**जात्याभासं चलाभासं वस्त्वाभासं तथैव च ।**
**अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम् ॥ ४५ ॥**

किं पुनः परमार्थसद्वस्तु यदास्पदा जात्याद्यसद्बुद्धय इत्याह—अजाति सज्जातिवदवभासत इति जात्याभासम् । तद्यथा देवदत्तो जायत इति । चलाभासं चलमिवाभासत इति । यथा स एव देवदत्तो गच्छतीति । वस्त्वाभासं वस्तु द्रव्यं धर्मि तद्वदवभासत इति वस्त्वाभासम् । यथा स एव देवदत्तो गौरो दीर्घ इति । जायते देवदत्तः स्पन्दते दीर्घो गौर इत्येवमवभासते । परमार्थतस्तु अजमचलमवस्तुत्वमद्रव्यं च । किं तदेवम्प्रकारं ? विज्ञानं विज्ञप्तिः । जात्यादिरहितत्वाच्छान्तम् । अत एवाद्वयं च तदित्यर्थः ॥ ४५ ॥

**एवं न जायते चित्तमेवं धर्मा अजाः स्मृताः ।**
**एवमेव विजानन्तो न पतन्ति विपर्यये ॥ ४६ ॥**

एवं यथोक्तेभ्यो हेतुभ्यो न जायते चित्तम् । एवं धर्मा आत्मानोऽजाः स्मृता ब्रह्मविद्भिः । धर्मा इति बहुवचनं देहभेदानुविधायित्वादद्वयस्यैव उपचारतः । एवमेव यथोक्तं विज्ञानं जात्यादिरहितमद्वयमात्मतत्त्वं विजानन्तः त्यक्तबाह्यैषणाः पुनर्न पतन्त्यविद्याध्वान्तसागरे विपर्यये । 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्यादिमन्त्रवर्णात् ॥ ४६ ॥

**ऋजुवक्रादिकाभासमलातस्पन्दितं यथा ।**
**ग्रहणग्राहकाभासं विज्ञानस्पन्दितं तथा ॥ ४७ ॥**

यथोक्तं परमार्थदर्शनं प्रपञ्चयिष्यन्नाह--यथा हि लोके ऋजुवक्रादिप्रकाराभासं अलातस्पन्दितमुल्काचलनं तथा ग्रहणग्राहकाभासं विषयिविषयाभासमित्यर्थः । किं तत् ? विज्ञानस्पन्दितम् । स्पन्दितमिव स्पन्दितमविद्यया । न ह्यचलस्य विज्ञानस्य स्पन्दनमस्ति । अजाचलमिति ह्युक्तम् ॥ ४७ ॥

**अस्पन्दमानमलातमनाभासमजं यथा ।**
**अस्पन्दमानं विज्ञानमनाभासमजं तथा ॥ ४८ ॥**

अस्पन्दमानं स्पन्दनवर्जितं तदेवालातं ऋज्वाद्याकारेण अजायमानं अनाभासमजं यथा, तथाऽविद्यया स्पन्दमानमविद्योपरमेऽस्पन्दमानं जात्याद्याकारेण अनाभासमजमचलं भविष्यतीत्यर्थः ॥ ४८ ॥

**अलाते स्पन्दमाने वै नाभासा अन्यतोभुवः ।**
**न ततोऽन्यत्र निस्पन्दान्नालातं प्रविशन्ति ते ॥ ४९ ॥**

किञ्च तस्मिन्नेवालाते स्पन्दमाने ऋजुवक्राद्याभासा अलातादन्यतः कुतश्चिदागत्यालाते नैव भवन्तीति नान्यतोभुवः । न च तस्मान्निस्पन्दादलातादन्यत्र निर्गताः । न च निस्पन्दमलातमेव प्रविशन्ति ते ॥ ४९ ॥

**न निर्गता अलातात्ते द्रव्यत्वाभावयोगतः ।**
**विज्ञानेऽपि तथैव स्युराभासस्याविशेषतः ॥ ५० ॥**

किं च न निर्गता अलातात्ते आभासा गृहादिव द्रव्यत्वाभावयोगतः । द्रव्यस्य भावो द्रव्यत्वम् । तदभावो द्रव्यत्वाभावः । द्रव्यत्वाभावयोगतो द्रव्य-

त्वाभावयुक्तेर्वस्तुत्वाभावादित्यर्थः। वस्तुनो हि प्रवेशादि सम्भवति, नावस्तुनः। विज्ञानेऽपि जात्याद्याभासास्तथैव स्युः आभासस्याविशेषतस्तुल्यत्वात् ॥ ५० ॥

कथं तुल्यत्वमित्याह—

**विज्ञाने स्पन्दमाने वै नाभासा अन्यतोभुवः ।**
**न ततोऽन्यत्र निस्पन्दान्न विज्ञानं विशन्ति ते ॥ ५१ ॥**
**न निर्गतास्ते विज्ञानाद्द्रव्यत्वाभावयोगतः ।**
**कार्यकारणताभावाद्यतोऽचिन्त्याः सदैव ते ॥ ५२ ॥**

अलातेन समानं सर्वं विज्ञानस्य। सदाऽचलत्वं तु विज्ञानस्य विशेषः। जात्याद्याभासा विज्ञानेऽचले किङ्कृता इत्याह। कार्यकारणताभावात् जन्यजनकत्वानुपपत्तेरभावरूपत्वात् अचिन्त्यास्ते यतः सदैव। यथाऽसत्स्वृज्वाद्याभासेषु ऋज्वादिबुद्धिर्दृष्टा अलातमात्रे, तथा असत्स्वेव जात्यादिषु विज्ञानमात्रे जात्यादिबुद्धिर्मृषैवेति समुदायार्थः ॥ ५१-५२ ॥

**द्रव्यं द्रव्यस्य हेतुः स्यादन्यदन्यस्य चैव हि ।**
**द्रव्यत्वमन्यभावो वा धर्माणां नोपपद्यते ॥ ५३ ॥**

अजमेकमात्मतत्त्वमिति स्थितम्। तत्र यैरपि कार्यकारणभावः कल्प्यते तेषां द्रव्यं द्रव्यस्यान्यस्यान्यद्धेतुः कारणं स्यात् न तु तस्यैव तत्। नाप्यद्रव्यं कस्यचित्कारणं स्वतन्त्रं दृष्टं लोके। न च द्रव्यत्वं धर्माणामात्मनां उपपद्यतेऽन्यत्वं वा कुतश्चिद्येनान्यस्य कारणत्वं कार्यत्वं वा प्रतिपद्येत। अतोऽद्रव्यत्वादनन्यत्वाच्च न कस्यचित्कार्यं कारणं वा आत्मेत्यर्थः ॥ ५३ ॥

**एवं न चित्तजा धर्माश्चित्तं वापि न धर्मजम् ।**
**एवं हेतुफलाजातिं प्रविशन्ति मनीषिणः ॥ ५४ ॥**

एवं यथोक्तेभ्यो हेतुभ्यः आत्मविज्ञानस्वरूपमेव चित्तमिति, न चित्तजा बाह्यधर्माः, नापि बाह्यधर्मजं चित्तम्। विज्ञानस्वरूपाभासमात्रत्वात्सर्वधर्माणाम्। एवं न हेतोः फलं जायते, नापि फलाद्धेतुरिति हेतुफलयोः अजातिं हेतुफलाजातिं प्रविशन्त्यध्यवस्यन्ति। आत्मनि हेतुफलयोरभावमेव प्रतिपद्यन्ते ब्रह्मविद इत्यर्थः ॥ ५४ ॥

**यावद्धेतुफलावेशस्तावद्धेतुफलोद्भवः ।**
**क्षीणे हेतुफलावेशे नास्ति हेतुफलोद्भवः ॥ ५५ ॥**

ये पुनर्हेतुफलयोरभिनिविष्टास्तेषां किं स्यादित्युच्यते—धर्माधर्माख्यस्य हेतोरहं कर्ता मम धर्माधर्मौ तत्फलं कालान्तरे क्वचित्प्राणिनिकाये जातो भोक्ष्य इति यावद्धेतुफलयोरावेशो हेतुफलाग्रहः आत्मन्यध्यारोपणं तच्चित्ततेत्यर्थः । तावद्धेतुफलयोरुद्भवो धर्माधर्मयोस्तत्फलस्य चानुच्छेदेन प्रवृत्तिरित्यर्थः । यदा पुनर्मन्त्रौषधिवीर्येणेव ग्रहावेशो यथोक्ताद्वैतदर्शनेन अविद्योद्भूतहेतुफलावेशोऽपनीतो भवति, तदा तस्मिन्क्षीणे नास्ति हेतुफलोद्भवः ॥ ५५ ॥

**यावद्धेतुफलावेशः संसारस्तावदायतः ।**
**क्षीणे हेतुफलावेशे संसारं न प्रपद्यते ॥ ५६ ॥**

यदि हेतुफलोद्भवः, तदा को दोष इत्युच्यते—यावत्सम्यग्दर्शनेन हेतुफलावेशो न निवर्तते ऽक्षीणः संसारस्तावदायतो दीर्घो भवतीत्यर्थः । क्षीणे पुनर्हेतुफलावेशे संसारं न प्रपद्यते, कारणाभावात् ॥ ५६ ॥

**संवृत्या जायते सर्वं शाश्वतं नास्ति तेन वै ।**
**सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै ॥ ५७ ॥**

नन्वजादात्मनोऽन्यन्नास्त्येव । तत्कथं हेतुफलयोः संसारस्य चोत्पत्तिविनाशावुच्येते त्वया ? शृणु । संवृत्या संवरणं संवृतिरविद्याविषयो लौकिको व्यवहारः तया संवृत्या जायते सर्वं, तेनाविद्याविषये शाश्वतं नित्यं नास्ति वै । अत उत्पत्तिविनाशलक्षणः संसार आयत इत्युच्यते । परमार्थसद्भावेन त्वजं सर्वमात्मैव यस्मात् । अतो जात्यभावादुच्छेदस्तेन नास्ति वै कस्यचिद्धेतुफलादेः इत्यर्थः ॥ ५७ ॥

**धर्मा य इति जायन्ते जायन्ते ते न तत्त्वतः ।**
**जन्म मायोपमं तेषां सा च माया न विद्यते ॥ ५८ ॥**

येऽप्यात्मानोऽन्ये च धर्मा जायन्त इति कल्प्यन्ते, ते इत्येवम्प्रकारा यथोक्ता संवृतिर्निर्दिश्यत इति संवृत्यैव धर्मा जायन्ते । न ते तत्त्वतः परमार्थतो

जायन्ते। यत्पुनस्तत्संवृत्या जन्म तेषां धर्माणां यथोक्तानां यथा मायया जन्म तथा तन्मायोपमं प्रत्येतव्यम्। माया नाम वस्तु तर्हि। नैवम्। सा च माया न विद्यते। मायेत्यविद्यमानस्याख्या इत्यभिप्रायः॥ ५८॥

**यथा मायामयाद्बीजाज्जायते तन्मयोऽङ्कुरः।**
**नासौ नित्यो न चोच्छेदी तद्वद्धर्मेषु योजना॥ ५९॥**

कथं मायोपमं तेषां धर्माणां जन्मेत्याह—यथा मायमयादाम्रादिबीजाज्जायते तन्मयो मायामयोऽङ्कुरो, नासावङ्कुरो नित्यो न चोच्छेदी विनाशी वा। अभूतत्वादेव धर्मेषु जन्मनाशादियोजना युक्तिः। न तु परमार्थतो धर्माणां जन्म नाशो वा युज्यत इत्यर्थः॥ ५९॥

**नाजेषु सर्वधर्मेषु शाश्वताशाश्वताभिधा।**
**यत्र वर्णा न वर्तन्ते विवेकस्तत्र नोच्यते॥ ६०॥**

परमार्थतस्त्वात्मसु अजेषु नित्यैकरसविज्ञप्तिमात्रसत्ताकेषु शाश्वतोऽशाश्वत इति वा नाभिधा नाभिधानं प्रवर्तत इत्यर्थः। यत्र येषु वर्ण्यन्ते यैरर्थास्ते वर्णाः शब्दा न वर्तन्तेऽभिधातुं प्रकाशयितुं न प्रवर्तन्ते इत्यर्थः। इदमेवमिति विवेको विविक्तता तत्र नित्योऽनित्य इति नोच्यते। 'यतो वाचो निवर्तन्ते' इति श्रुतेः॥ ६०॥

**यथा स्वप्ने द्वयाभासं चित्तं चलति मायया।**
**तथा जाग्रद्द्वयाभासं चित्तं चलति मायया॥ ६१॥**

**अद्वयं च द्वयाभासं चित्तं स्वप्ने न संशयः।**
**अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः॥ ६२॥**

यत्पुनर्वाग्गोचरत्वं परमार्थतोऽद्वयस्य विज्ञानमात्रस्य, तन्मनसः स्पन्दनमात्रं न परमार्थत इति। उक्तार्थौ श्लोकौ॥ ६१–६२॥

**स्वप्नदृक्प्रचरन्स्वप्ने दिक्षु वै दशसु स्थितान्।**
**अण्डजान्स्वेदजान्वापि जीवान्पश्यति यान्सदा॥ ६३॥**

इतश्च वाग्गोचरस्याभावो द्वैतस्य। स्वप्नान्पश्यतीति स्वप्नदृक्प्रचरन्पर्यट-

स्वप्ने स्वप्नस्थाने दिक्षु वै दशसु स्थितान्वर्तमानाञ्जीवान्प्राणिनः अण्डजान्स्वेदजान्वा यान्सदा पश्यतीति ॥ ६३ ॥

यद्येवं ततः किम् ? उच्यते—

**स्वप्नदृक्चित्तदृश्यास्ते न विद्यन्ते ततः पृथक् ।**
**तथा तद्दृश्यमेवेदं स्वप्नदृक्चित्तमिष्यते ॥ ६४ ॥**

स्वप्नदृशश्चित्तं स्वप्नदृक्चित्तम् । तेन दृश्यास्ते जीवाः । ततस्तस्मात्स्वप्नदृक्चित्तात्पृथङ्न विद्यन्ते न सन्तीत्यर्थः । चित्तमेव ह्यनेकजीवादिभेदाकारेण विकल्प्यते तथा तदपि स्वप्नदृक्चित्तमिदं तद्दृश्यमेव, तेन स्वप्नदृशा दृश्यं तद्दृश्यम् । अतः स्वप्नदृग्व्यतिरेकेण चित्तं नाम नास्तीत्यर्थः ॥ ६४ ॥

**चरञ्जागरिते जाग्रद्दिक्षु वै दशसु स्थितान् ।**
**अण्डजान्स्वेदजान्वापि जीवान्पश्यति यान्सदा ॥ ६५ ॥**

**जाग्रच्चित्तेक्षणीयास्ते न विद्यन्ते ततः पृथक् ।**
**तथा तद्दृश्यमेवेदं जाग्रतश्चित्तमिष्यते ॥ ६६ ॥**

जाग्रतो दृश्या जीवास्तच्चित्ताव्यतिरिक्ताः चित्तेक्षणीयत्वात् । स्वप्नदृक्चित्तेक्षणीयजीववत् । तच्च जीवेक्षणात्मकं चित्तं द्रष्टुरव्यतिरिक्तं द्रष्टृदृश्यत्वात्स्वप्नचित्तवत् । उक्तार्थमन्यत् ॥ ६५–६६ ॥

**उभे ह्यन्योन्यदृश्ये ते किं तदस्तीति चोच्यते ।**
**लक्षणाशून्यमुभयं तन्मतेनैव गृह्यते ॥ ६७ ॥**

जीवचित्ते उभे चित्तचैत्ये ते अन्योन्यदृश्ये इतरेतरगम्ये । जीवादिविषयापेक्षं हि चित्तं नाम भवति । चित्तापेक्षं हि जीवादि दृश्यम् । अतस्ते अन्योन्यदृश्ये । तस्मान्न किञ्चिदस्तीति चोच्यते चित्तं वा चित्तेक्षणीयं वा । किं तदस्तीति विवेकिनोच्यते । नहि स्वप्ने हस्ती हस्तिचित्तं वा विद्यते, तथेहापि विवेकिनामित्यभिप्रायः । कथम् ? लक्षणाशून्यं, लक्ष्यतेऽनयेति लक्षणा प्रमाणं, प्रमाणशून्यमुभयं चित्तं चैत्यं द्वयं यतस्तन्मतेनैव तच्चित्ततयैव तद्गृह्यते । नहि घटमतिं प्रत्याख्याय घटो गृह्यते, नापि घटं प्रत्याख्याय घटमतिः । नहि तत्र प्रमाणप्रमेयभेदः शक्यते कल्पयितुमित्यभिप्रायः ॥ ६७ ॥

**यथा स्वप्नमयो जीवो जायते म्रियतेऽपि च ।**
**तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ ६८ ॥**

**यथा मायामयो जीवो जायते म्रियतेऽपि च ।**
**तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ ६९ ॥**

**यथा निर्मितको जीवो जायते म्रियतेऽपि च ।**
**तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ ७० ॥**

मायामयो मायाविना यः कृतो निर्मितको मन्त्रौषध्यादिभिर्निष्पादितः। स्वप्नमायानिर्मितका अण्डजादयो जीवा यथा जायन्ते म्रियन्ते च, तथा मनुष्यादिलक्षणा अविद्यमाना एव चित्तविकल्पनामात्रा इत्यर्थः ॥ ६८-६९-७० ॥

**न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते ।**
**एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते ॥ ७१ ॥**

व्यवहारसत्यविषये जीवानां जन्ममरणादिः स्वप्नादिजीववदित्युक्तम् । उत्तमं तु परमार्थसत्यं न कश्चिज्जायते जीव इति । उक्तार्थमन्यत् ॥ ७१ ॥

**चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद्द्वयम् ।**
**चित्तं निर्विषयं नित्यमसङ्गं तेन कीर्तितम् ॥ ७२ ॥**

सर्वं ग्राह्यग्राहकवच्चित्तस्पन्दितमेव द्वयम् । चित्तं परमार्थत आत्मैवेति निर्विषयं, तेन निर्विषयत्वेन नित्यमसङ्गं कीर्तितम् । 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः । सविषयस्य हि विषये सङ्गः । निर्विषयत्वाच्चित्तमसङ्गमित्यर्थः ॥ ७२ ॥

**योऽस्ति कल्पितसंवृत्या परमार्थेन नास्त्यसौ ।**
**परतन्त्राभिसंवृत्या स्यान्नास्ति परमार्थतः ॥ ७३ ॥**

ननु निर्विषयत्वेन चेदसङ्गत्वं, चित्तस्य न निःसङ्गता भवति, यस्माच्छास्ता शास्त्रं शिष्यश्चेत्येवमादेर्विषयस्य विद्यमानत्वात् । नैष दोषः । कस्मात् ? यः पदार्थः शास्त्रादिर्विद्यते स कल्पितसंवृत्या । कल्पिता च सा परमार्थप्रतिपत्त्युपायत्वेन संवृतिश्च सा तया योऽस्ति परमार्थेन, नास्त्यसौ न विद्यते । "ज्ञाते द्वैतं न विद्यते" इत्युक्तम् । यश्च परतन्त्राभिसंवृत्या परशास्त्रव्यवहारेण

स्यात्पदार्थः, स परमार्थतो निरूप्यमाणो नास्त्येव । तेन युक्तमुक्तं "असत्तं तेन कीर्तितं" इति ॥ ७३ ॥

**अजः कल्पितसंवृत्या परमार्थेन नाप्यजः ।**
**परतन्त्राभिनिष्पत्त्या संवृत्या जायते तु सः ॥ ७४ ॥**

ननु शास्त्रादीनांसंवृतित्वेऽज इतीयमपि कल्पना संवृतिः स्यात् । सत्यमेवम् । शास्त्रादिकल्पनसंवृत्यैव अज इत्युच्यते । परमार्थेन नाप्यजः । यस्मात्परतन्त्राभिनिष्पत्त्या परशास्त्रसिद्धिमपेक्ष्य योऽज इत्युक्तः स संवृत्या जायते अतोऽज इतीयमपि कल्पना परमार्थविषये नैव क्रमत इत्यर्थः ॥ ७४ ॥

**अभूताभिनिवेशोऽस्ति द्वयं तत्र न विद्यते ।**
**द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायते ॥ ७५ ॥**

यस्मादसद्विषयस्तस्मादसत्यभूते द्वैतेऽभिनिवेशोऽस्ति केवलम् । अभिनिवेश आग्रहमात्रम् । द्वयं तत्र न विद्यते । मिथ्याभिनिवेशमात्रं च जन्मनः कारणं यस्मात् तस्मात् द्वयाभावं बुद्ध्वा निर्निमित्तो निवृत्तमिथ्याद्वयाभिनिवेशो यः स न जायते ॥ ७५ ॥

**यदा न लभते हेतूनुत्तमाधममध्यमान् ।**
**तदा न जायते चित्तं हेत्वभावे फलं कुतः ॥ ७६ ॥**

जात्याश्रमविहिता आश्रमिभिरनुष्ठीयमाना धर्मा देवत्वादिप्राप्तिहेतवः उत्तमाः केवलाश्च । धर्माधर्मव्यामिश्रा मनुष्यत्वादिप्राप्त्यर्था मध्यमाः । तिर्यगादिप्राप्तिनिमित्ता अधर्मलक्षणाः प्रवृत्तिविशेषाश्चाधमाः । तानुत्तममध्यमाधमान् अविद्यापरिकल्पितान्यदा एकमेवाद्वितीयमात्मतत्त्वं सर्वकल्पनावर्जितं जानन्न लभते न पश्यति, यथा बालैर्दृश्यमानं गगने मलं विवेकी न पश्यति तद्वत्, तदा न जायते नोत्पद्यते चित्तं देवाद्याकारैः उत्तमाधममध्यमफलरूपेण । न ह्यसति हेतौ फलमुत्पद्यते बीजाद्यभाव इव सस्यादि ॥ ७६ ॥

**अनिमित्तस्य चित्तस्य यानुत्पत्तिः समाऽद्वया ।**
**अजातस्यैव सर्वस्य चित्तदृश्यं हि तद्यतः ॥ ७७ ॥**

हेत्वभावे चित्तं नोत्पद्यत इति ह्युक्तम्। सा पुनरनुत्पत्तिश्चित्तस्य कीदृशी इत्युच्यते। परमार्थदर्शनेन निरस्तधर्माधर्माख्योत्पत्तिनिमित्तस्य अनिमित्तस्य चित्तस्येति या मोक्षाख्याऽनुत्पत्तिः सा सर्वदा सर्वावस्थासु समा निर्विशेषाऽद्वया च। पूर्वमप्यजातस्यैवानुत्पन्नस्य चित्तस्य सर्वस्याद्वयस्येत्यर्थः। यस्मात्प्रागपि विमानाच्चित्तं दृश्यं तत् न तद्द्वयं जन्म च, तस्मादजातस्य सर्वस्य सर्वदा चित्तस्य समाऽद्वयैवानुत्पत्तिर्न पुनः कदाचिद्भवति, कदाचिद्वा न भवति। सर्वदा एकरूपैवेत्यर्थः॥ ७७॥

**बुद्ध्वाऽनिमित्ततां सत्यां हेतुं पृथगनाप्नुवन्।**
**वीतशोकं तथा काममभयं पदमश्नुते॥ ७८॥**

यथोक्तेन न्यायेन जन्मनिमित्तस्य द्वयस्य अभावादनिमित्ततां च सत्यां परमार्थरूपां बुद्ध्वा हेतुं धर्मादिकारणं देवादियोनिप्राप्तये पृथगनाप्नुवन्ननुपाददानः त्यक्तबाह्यैषणः सन्कामशोकादिवर्जितं अविद्यादिरहितं अभयं पदमश्नुते। पुनर्न जायत इत्यर्थः॥ ७८॥

**अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्तते।**
**वस्त्वभावं स बुद्ध्वैव निःसङ्गं विनिवर्तते॥ ७९॥**

यस्मादभूताभिनिवेशादसति द्वये द्वयास्तित्वनिश्चयोऽभूताभिनिवेशः, तस्मादविद्याव्यामोहरूपाद्धि सदृशे तदनुरूपे तच्चित्तं प्रवर्तते। तस्य द्वयस्य वस्तुनोऽभावं यदा बुद्धवांस्तदा तस्मान्निःसङ्गं निरपेक्षं सद्विनिवर्तते अभूताभिनिवेशविषयात्॥ ७९॥

**निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थितिः।**
**विषयः स हि बुद्धानां तत्साम्यमजमद्वयम्॥ ८०॥**

निवृत्तस्य द्वैतविषयाद्विषयान्तरे चाप्रवृत्तस्य अभावदर्शनेन चित्तस्य निश्चला चलनवर्जिता ब्रह्मस्वरूपैव तदा स्थितिः, येषा ब्रह्मस्वरूपा स्थितिश्चित्तस्य अद्वयविज्ञानैकरसघनलक्षणा। स हि यस्माद्विषयो गोचरः परमार्थदर्शिनां बुद्धानां, तस्मात्तत्साम्यं परं निर्विशेषमजमद्वयं च॥ ८०॥

**अजमनिद्रमस्वप्नं प्रभातं भवति स्वयम् ।**
**सकृद्विभातो ह्येवैष धर्मो धातुस्वभावतः ॥ ८१ ॥**

पुनरपि कीदृशश्चासौ बुद्धानां विषय इत्याह—स्वयमेव तत्प्रभातं भवति नादित्याद्यपेक्षं, स्वयंज्योतिःस्वभावमित्यर्थः । सकृद्विभातः सदैव विभात इत्येतत् । एष एवंलक्षण आत्माख्यो धर्मो धातुस्वभावतो वस्तुस्वभावतः इत्यर्थः ॥ ८१ ॥

**सुखमाव्रियते नित्यं दुःखं विव्रियते सदा ।**
**यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ ॥ ८२ ॥**

एवं बहुशः उच्यमानमपि परमार्थतत्त्वं कस्माल्लौकिकैर्न गृह्यत इत्युच्यते — यस्मादस्य कस्यचिद्द्वयवस्तुनो धर्मस्य ग्रहेण ग्रहणावेशेन मिथ्याभिनिविष्टतया सुखमाव्रियतेऽनायासेनाच्छाद्यत इत्यर्थः । द्वयोपलब्धिनिमित्तं हि तत्र आवरणं न यत्नान्तरमपेक्षते । दुःखं च विव्रियते प्रकटीक्रियते । परमार्थज्ञानस्य दुर्लभत्वात् । भगवानसौ आत्माऽद्वयो देव इत्यर्थः । अतो वेदान्तैराचार्यैश्च बहुश उच्यमानोऽपि नैव ज्ञातुं शक्य इत्यर्थः । 'आश्चर्यो वक्ता कुशलोऽस्य लब्धा' इति श्रुतेः ॥ ८२ ॥

**अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः ।**
**चलस्थिरोभयाभावैरावृणोत्येव बालिशः ॥ ८३ ॥**

अस्ति नास्तीत्यादिसूक्ष्मविषया अपि पण्डितानां ग्रहाः भगवतः परमात्मन आवरणा एव । किमुत मूढजनानां बुद्धिलक्षणा इत्येवमर्थं प्रदर्शयन्नाह—अस्तीति । अस्त्यात्मेति वादी कश्चित्प्रतिपद्यते । नास्तीत्यपरो वैनाशिकः । अस्ति नास्तीत्यपरोऽर्धवैनाशिकः सदसद्वादी दिग्वासाः । नास्ति नास्तीत्यत्यन्तशून्यवादी । तत्रास्तिभावश्चलः, घटाद्यनित्यविलक्षणत्वात् । नास्तिभावः स्थिरः सदाविशेषत्वात् । उभयं चलस्थिरविषयत्वात्सदसद्भावः । अभावोऽत्यन्ताभावः । प्रकारचतुष्टयस्यापि तैरेतैश्चलस्थिरोभयाभावैः सदसदादिवादी सर्वोऽपि भगवन्तमावृणोत्येव बालिशोऽविवेकी । यद्यपि पण्डितो बालिश एव परमार्थतत्त्वानवबोधात्, किमु स्वभावमूढो जन इत्यभिप्रायः ॥ ८३ ॥

**कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदावृतः ।**
**भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक् ॥ ८४ ॥**

कीदृक्पुनः परमार्थतत्त्वं यदवबोधादबालिशः पण्डितो भवतीत्याह—कोट्यः प्रावादुकशास्त्रनिर्णयान्ता एता उक्ताः अस्ति नास्तीत्याद्याश्चतस्रो, यासां कोटीनां ग्रहैर्ग्रहणैरुपलब्धिनिश्चयैः सदा सर्वदा आवृत आच्छादितस्तेषामेव प्रावादुकानां यः, स भगवानाभिः अस्ति-नास्तीत्यादिकोटिभिः चतसृभिरप्यस्पृष्टः अस्त्यादिविकल्पनावर्जित इत्येतत् । येन मुनिना दृष्टो ज्ञातो वेदान्तेष्वौपनिषदः पुरुषः स सर्वदृक्सर्वज्ञः परमार्थपण्डित इत्यर्थः ॥ ८४ ॥

**प्राप्य सर्वज्ञतां कृत्स्नां ब्राह्मण्यं पदमद्वयम् ।**
**अनापन्नादिमध्यान्तं किमतः परमीहते ॥ ८५ ॥**

प्राप्यैतां यथोक्तां कृत्स्नां समस्तां सर्वज्ञतां ब्राह्मण्यं पदं 'स ब्राह्मणः' 'एष नित्यो महिमा ब्राह्मणस्य' इति श्रुतेः । अनापन्नादिमध्यान्तं आदिमध्यान्ता उत्पत्तिस्थितिलया अनापन्ना अप्राप्ता यस्याद्वयस्य पदस्य न विद्यन्ते, तदनापन्नादिमध्यान्तं ब्राह्मण्यं पदम् । तदेव प्राप्य लब्ध्वा किमतः परमस्मादात्मलाभादूर्ध्वमीहते चेष्टते, निष्प्रयोजनमित्यर्थः । "नैव तस्य कृतेनार्थः" इत्यादिस्मृतेः ॥ ८५ ॥

**विप्राणां विनयो ह्येष शमः प्राकृत उच्यते ।**
**दमः प्रकृतिदान्तत्वादेवं विद्वाञ्शमं व्रजेत् ॥ ८६ ॥**

विप्राणां ब्राह्मणानां विनयो विनीतत्वं स्वाभाविकं यदेतदात्मस्वरूपेणावस्थानम् । एष विनयः शमोऽप्येष एव प्राकृतः स्वाभाविकोऽकृतक उच्यते । दमोऽप्येष एव प्रकृतिदान्तत्वात्स्वभावत एव चोपशान्तरूपत्वाद्ब्रह्मणः । एवं यथोक्तं स्वभावोपशान्तं ब्रह्म विद्वाञ्शममुपशान्तिं स्वाभाविकीं ब्रह्मस्वरूपां व्रजेद्ब्रह्मस्वरूपेणावतिष्ठेत इत्यर्थः ॥ ८६ ॥

**सवस्तु सोपलम्भं च द्वयं लौकिकमिष्यते ।**
**अवस्तु सोपलम्भं च शुद्धं लौकिकमिष्यते ॥ ८७ ॥**

एवमन्योन्यविरुद्धत्वात् संसारकारणानि रागद्वेषदोषास्पदानि प्रावादुकानां दर्शनानि। अतो मिथ्यादर्शनानि तानीति तद्युक्तिभिरेव दर्शयित्वा चतुष्कोटिवर्जितत्वात् रागादिदोषानास्पदं स्वभावशान्तमद्वैतदर्शनमेव सम्यग्दर्शनमित्युपसंहृतम्। अथेदानीं स्वप्रक्रियाप्रदर्शनार्थ आरम्भः—सवस्तु संवृति, सत्ता वस्तुना सह वर्तते इति सवस्तु। तथा चोपलब्धिरुपलम्भः। तेन सह वर्तत इति सोपलम्भं च शास्त्रादिसर्वव्यवहारास्पदं ग्राह्यग्राहकलक्षणं द्वयं लौकिकं लोकादनपेतं लौकिकं जागरितमित्येतत्। एवंलक्षणं जागरितमिष्यते वेदान्तेषु। अवस्तु संवृतेरप्यभावात्। सोपलम्भं वस्तुवदुपलम्भनमुपलम्भोऽसत्यपि वस्तुनि, तेन सह वर्तत इति सोपलम्भं च। शुद्धं केवलं प्रविभक्तं जागरितात्स्थूलाल्लौकिकं सर्वप्राणिसाधारणत्वादिष्यते स्वप्न इत्यर्थः॥ ८७॥

**अवस्त्वनुपलम्भं च लोकोत्तरमिति स्मृतम्।**
**ज्ञानं ज्ञेयं च विज्ञेयं सदा बुद्धैः प्रकीर्तितम्॥ ८८॥**

अवस्त्वनुपलम्भं च ग्राह्यग्रहणवर्जितमित्येतल्लोकोत्तरम्। अत एव लोकातीतम्। ग्राह्यग्रहणविषयो हि लोकः, तदभावात्सर्वप्रवृत्तिबीजं सुषुप्तमित्येतत्। एवं स्मृतं सोपायं परमार्थतत्त्वं लौकिकम्। शुद्धलौकिकं लोकोत्तरं क्रमेण येन ज्ञानेन ज्ञायते, तज्ज्ञानं ज्ञेयमेतान्येव त्रीणि। एतद्व्यतिरेकेण ज्ञेयानुपपत्तेः। सर्वप्रावादुककल्पितवस्तुनोऽत्रैवान्तर्भावात्। विज्ञेयं परमार्थसत्यं तुर्याख्यमद्वयमजमात्मतत्त्वं इत्यर्थः। सदा सर्वदैव, तल्लौकिकादिविज्ञेयान्तं बुद्धैः परमार्थदर्शिभिर्ब्रह्मविद्भिः प्रकीर्तितम्॥ ८८॥

**ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम्।**
**सर्वज्ञता हि सर्वत्र भवतीह महाधियः॥ ८९॥**

ज्ञाने च लौकिकादिविषये। ज्ञेये च लौकिकादौ त्रिविधे। पूर्वं लौकिकं स्थूलम्। तदभावेन पश्चाच्छुद्धं लौकिकम्। तदभावेन लोकोत्तरमित्येवं क्रमेण स्थानत्रयाभावेन परमार्थसत्ये तुर्ये द्वयेऽजेऽभये विदिते, स्वयमेव आत्मस्वरूपमेव सर्वज्ञता सर्वश्चासौ ज्ञश्च सर्वज्ञस्तद्भावः सर्वज्ञता। इहास्मिँल्लोके भवति महाधियो महाबुद्धेः। सर्वलोकातिशयवस्तुविषयबुद्धित्वादेवंविदः सर्वत्र सर्वदा

भवति । सकृद्विदिते स्वरूपे व्यभिचाराभावादित्यर्थः । न हि परमार्थविदो ज्ञानिनः ज्ञानोद्भवाभिभवौ स्तो यथाऽन्येषां प्रावादुकानाम् ॥ ८९ ॥

**हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणतः ।**
**तेषामन्यत्र विज्ञेयादुपलम्भस्त्रिषु स्मृतः ॥ ९० ॥**

लौकिकादीनां क्रमेण ज्ञेयत्वेन निर्देशादस्तित्वाशङ्का परमार्थतो मा भूत् इत्याह—हेयानि च लौकिकादीनि त्रीणि जागरितस्वप्नसुषुप्तानि आत्मन्यसत्त्वेन रज्ज्वां सर्पवद्धातव्यानीत्यर्थः । ज्ञेयमिह चतुष्कोटिवर्जितं परमार्थतत्त्वम् । आप्यान्याप्तव्यानि त्यक्तबाह्यैषणात्रयेण भिक्षुणा पाण्डित्यबाल्यमौनाख्यानि साधनानि । पाक्यानि रागद्वेषमोहादयो दोषाः कषायाख्यानि पक्तव्यानि । सर्वाण्येतानि हेयज्ञेयाप्यपाक्यानि विज्ञेयानि भिक्षुणोपायत्वेनेत्यर्थः । अग्रयाणतःप्रथमतः। तेषां हेयादीनामन्यत्र विज्ञेयात्परमार्थसत्यं विज्ञेयं ब्रह्मैकं वर्जयित्वा । उपलम्भनं उपलम्भोऽविद्याकल्पनामात्रम् । हेयाप्यपाक्येषु त्रिष्वपि स्मृतो ब्रह्मविद्भिर्न परमार्थसत्यता त्रयाणामित्यर्थः ॥ ९० ॥

**प्रकृत्याकाशवज्ज्ञेयाः सर्वे धर्मा अनादयः ।**
**विद्यते न हि नानात्वं तेषां क्वचन किञ्चन ॥ ९१ ॥**

परमार्थतस्तु प्रकृत्या स्वभावतः आकाशवदाकाशतुल्याः सूक्ष्मनिरञ्जनसर्वगतत्वैः सर्वे धर्मा आत्मानो ज्ञेया मुमुक्षुभिरनादयो नित्याः। बहुवचनकृतभेदाशङ्कां निराकुर्वन्नाह—क्वचन क्वचिदपि किञ्चन किञ्चिदणुमात्रमपि तेषां न विद्यते नानात्वमिति ॥ ९१ ॥

**आदिबुद्धाः प्रकृत्येव सर्वे धर्माः सुनिश्चिताः।**
**यस्यैवं भवति क्षान्तिः सोऽमृतत्वाय कल्पते ॥ ९२ ॥**

ज्ञेयतापि धर्माणां संवृत्यैव, न परमार्थतः, इत्याह—यस्मादादौ बुद्धा आदिबुद्धाः प्रकृत्यैव स्वभावत एव यथा नित्यप्रकाशस्वरूपः सविता, एवं नित्यबोधस्वरूपा इत्यर्थः। सर्वे धर्माः सर्व आत्मानः। न च तेषां निश्चयः कर्तव्या नित्यनिश्चितस्वरूपा इत्यर्थः। न सन्दिह्यमानस्वरूपा एवं नैवं वेति। यस्य मुमुक्षोरेवं यथोक्तप्रकारेण सर्वदा बोधनिश्चयनिरपेक्षता आत्मार्थं परार्थं वा । यथा

सविता नित्यं प्रकाशान्तरनिरपेक्षः स्वार्थे परार्थे वेत्येवं भवति क्षान्तिर्बोधकर्तव्यतानिरपेक्षता सर्वदा स्वात्मनि, सोऽमृतत्वायामृतभावाय कल्पते । मोक्षाय समर्थो भवतीत्यर्थः ॥ ९२ ॥

**आदिशान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः ।**
**सर्वे धर्माः समाभिन्ना अजं साम्यं विशारदम् ॥ ९३ ॥**

तथा नापि शान्तिकर्तव्यता आत्मनीत्याह—यस्मादादिशान्ता नित्यमेव शान्ता अनुत्पन्ना अजाश्च प्रकृत्यैव सुनिर्वृताः सुष्ठूपरतस्वभावा नित्यमुक्तस्वभावाः इत्यर्थः । सर्वे धर्माः समाश्चाभिन्नाश्च समाभिन्ना अजं साम्यं विशारदं विशुद्धमात्मतत्त्वं यस्मात्तस्माच्छान्तिर्मोक्षो वा नास्ति कर्तव्य इत्यर्थः । न हि नित्यैकस्वभावस्य कृतं किञ्चिदर्थवत्स्यात् ॥ ९३ ॥

**वैशारद्यं तु वै नास्ति भेदे विचरतां सदा ।**
**भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः ॥ ९४ ॥**

ये यथोक्तं परमार्थतत्त्वं प्रतिपन्नाः ते एवाकृपणा लोके । कृपणा एवान्य इत्याह—यस्माद्भेदनिम्ना भेदानुयायिनः संसारानुगा इत्यर्थः । के ? पृथग्वादाः पृथङ्नाना वस्त्वित्येवं वदनं येषां ते पृथग्वादा द्वैतिन इत्यर्थः । तस्मात्ते कृपणाः क्षुद्राः स्मृताः, यस्माद्वैशारद्यं विशुद्धिर्नास्ति तेषां भेदे विचरतां द्वैतमार्गेऽविद्याकल्पिते सर्वदा वर्तमानानामित्यर्थः । अतो युक्तमेव तेषां कार्पण्यं इत्यभिप्रायः ॥ ९४ ॥

**अजे साम्ये तु ये केचिद्भविष्यन्ति सुनिश्चिताः ।**
**ते हि लोके महाज्ञानास्तच्च लोको न गाहते ॥ ९५ ॥**

यदिदं परमार्थतत्त्वं अमहात्मभिरपण्डितैर्वेदान्तबहिष्ठैः क्षुद्रैरल्पप्रज्ञैः अनवगाह्यमित्याह—अजे साम्ये परमार्थतत्त्वे एवमेवेति ये केचित्स्त्र्यादयोऽपि सुनिश्चिता भविष्यन्ति चेत् ते एव हि लोके महाज्ञाना निरतिशयतत्त्वविषयज्ञाना इत्यर्थः । तच्च तेषां वर्त्म तेषां विदितं परमार्थतत्त्वं सामान्यबुद्धिरन्यो लोको न गाहते नावतरति न विषयीकरोतीत्यर्थः । "सर्वभूतात्मभूतस्य सर्व-

भूतहितस्य च । देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः । शकुनीनामिवाकाशे गतिर्नैवोपलभ्यते" इत्यादिस्मरणात् ॥ ९५ ॥

**अजेष्वजमसङ्क्रान्तं धर्मेषु ज्ञानमिष्यते ।**
**यतो न क्रमते ज्ञानमसङ्गं तेन कीर्तितम् ॥ ९६ ॥**

कथं महाज्ञानत्वमित्याह—अजेष्वनुत्पन्नेष्वचलेषु धर्मेष्वात्मसु अजमचलं च ज्ञानमिष्यते सवितरीवौष्ण्यं प्रकाशश्च यतः, तस्मादसङ्क्रान्तं अर्थान्तरे ज्ञानमजमिष्यते । यस्मान्न क्रमतेऽर्थान्तरे ज्ञानं, तेन कारणेन असङ्गं तत्कीर्तितं आकाशकल्पमित्युक्तम् ॥ ९६ ॥

**अणुमात्रेऽपि वैधर्म्ये जायमानेऽविपश्चितः ।**
**असङ्गता सदा नास्ति किमुतावरणच्युतिः ॥ ९७ ॥**

इतोऽन्येषां वादिनां अणुमात्रेऽल्पेऽपि वैधर्म्ये वस्तुनि बहिरन्तर्वा जायमाने उत्पाद्यमानेऽविपश्चितोऽविवेकिनोऽसङ्गता असङ्गत्वं सदा नास्ति । किमुत वक्तव्यमावरणच्युतिः बन्धनाशो नास्तीति ॥ ९७ ॥

**अलब्धावरणाः सर्वे धर्माः प्रकृतिनिर्मलाः ।**
**आदौ बुद्धास्तथा मुक्ता बुध्यन्त इति नायकाः ॥ ९८ ॥**

तेषामावरणच्युतिर्नास्तीति ब्रुवतां स्वसिद्धान्तेऽभ्युपगतं तर्हि धर्माणामावरणम् । नेत्युच्यते । अलब्धावरणाः । अलब्धमप्राप्तमावरणं अविद्यादिबन्धनं येषां ते धर्मा अलब्धावरणा बन्धनरहिता इत्यर्थ । प्रकृतिनिर्मलाः स्वभावशुद्धा आदौ बुद्धास्तथा मुक्ता यस्मान्नित्यशुद्धबुद्धमुक्तस्वभावाः । यद्येवं कथं तर्हि बुध्यन्त इत्युच्यते—नायकाः स्वामिनः समर्था बोद्धुं बोधशक्तिमत्स्वभावा इत्यर्थः । यथा नित्यप्रकाशस्वरूपोऽपि सन् सविता प्रकाशत इत्युच्यते, यथा वा नित्यनिवृत्तगतयोऽपि नित्यमेव शैलास्तिष्ठन्तीत्युच्यते, तद्वत् ॥ ९८ ॥

**क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तायिनः ।**
**सर्वे धर्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम् ॥ ९९ ॥**

अस्ति नास्तीत्यनुप्रश्नो व्याख्यातः । कार्यरसलाभप्राणनाभयप्रतिष्ठाभयदर्शनापपत्तिभ्योऽस्त्येव तदाकाशादिकारणं ब्रह्मेत्यपाकृतोऽनुप्रश्न एकः, द्वावन्यावनुप्रश्नौ विद्वदविदुषोर्ब्रह्मप्राप्त्यप्राप्तिविषयौ । तत्र विद्वान्समश्नुते न समश्नुत इत्यनुप्रश्नोऽन्त्यः । तदपाकरणायोच्यते । मध्यमोऽनुप्रश्नो अन्त्यापाकरणादेवापाकृत इति तदपाकरणाय न यत्यते । स यः कश्चिदेवं यथोक्तं ब्रह्मोत्सृज्योत्कर्षापकर्षमद्वैतं सत्यं ज्ञानमनन्तमस्मीत्येवं वेत्तीत्येवंवित् । एवंशब्दस्य प्रकृतपरामर्शार्थत्वात् । स किम् ? अस्माल्लोकात्प्रेत्य, दृष्टादृष्टेष्टविषयसमुदायो ह्ययं लोकस्तस्मादस्माल्लोकात्प्रेत्य प्रत्यावृत्य निरपेक्षो भूत्वैतं यथाव्याख्यातमन्नमयं आत्मानमुपसङ्क्रामति, विषयजातमन्नमयात्पिण्डात्मनो व्यतिरिक्तं न पश्यति, सर्वं स्थूलभूतमन्नमयमात्मानं पश्यतीत्यर्थः । ततोऽभ्यन्तरमेतं प्राणमयं सर्वान्नमयात्मस्थमविभक्तम् । अथैतं मनोमयं विज्ञानमयं आनन्दमयमात्मानमुपसङ्क्रामति । अथादृश्ये नात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते ।

तत्रैतच्चिन्त्यम् । कोऽयमेवंवित्कथं वा सङ्क्रामतीति । किं परस्मादात्मनोऽन्यः सङ्क्रमणकर्ता प्रविभक्त उत स एवेति । किं ततः, यद्यन्यः स्यात् श्रुतिविरोधः । 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'अन्योऽसावन्योऽहमस्मीति न स वेद' 'एकमेवाद्वितीयम्' 'तत्त्वमसि' इति । अथ स एव आनन्दमयमात्मानमुपसङ्क्रामतीति, कर्मकर्तृत्वानुपपत्तिः । परस्यैव च संसारित्वं पराभावो वा । यद्युभयथा प्राप्तो दोषो न परिहर्तुं शक्यत इति व्यर्था चिन्ता । अथान्यतरस्मिन्पक्षे दोषाप्राप्तिस्तृतीये वा पक्षेऽदुष्टे, स एव शास्त्रार्थ इति व्यर्थैव चिन्ता । न । तन्निर्धारणार्थत्वात् । सत्यं प्राप्तो दोषो न शक्यः परिहर्तुमन्यतरस्मिंस्तृतीये वा पक्षेऽदुष्टेऽवधृते व्यर्था चिन्ता स्यात् न तु सोऽवधृत इति तदवधारणार्थत्वात् अर्थवत्येवैषा चिन्ता । सत्यमर्थवती चिन्ता । शास्त्रार्थावधारणार्थत्वात् । चिन्तयसि च त्वं न तु निर्णेष्यसि किञ्च निर्णेतव्यमिति वेदवचनं ? न, कथं तर्हि बहुप्रतिपक्षत्वात् । एकत्ववादी त्वं, एकः वेदार्थपरत्वात् । बहवो हि नानात्ववादिनो वेदबाह्याः त्वत्प्रतिपक्षा अतो ममाशङ्का न निर्णेष्यसीति । एतदेव मे स्वस्त्ययनं—यन्मामेकयोगिनमनेकयोगिबहुप्रतिपक्षमात्थ । अतो जेष्यामि सर्वानारभे च चिन्ताम् ।

स एव तु स्यात्तद्भावस्य विवक्षितत्वात् । तद्विज्ञानेन परमात्मभावो ह्यत्र-विवक्षितो ब्रह्मविदाप्नोति परमिति । न ह्यन्यस्यान्यभावापत्तिरुपपद्यते । ननु तस्यापि तद्भावापत्तिरनुपपन्नैव । न । अविद्याकृतानात्मापोहार्थत्वात् । या हि ब्रह्मविद्यया स्वात्मप्राप्तिरुपदिश्यते साऽविद्याकृतस्य अन्नादिविशेषात्मनः आत्म-त्वेनाध्यारोपितस्य अनात्मनोऽपोहार्था । कथमेवमर्थतावगम्यते, विद्यामात्रोप-देशात् । विद्यायाश्च दृष्टं कार्यमविद्यानिवृत्तिस्तच्चेह विद्यामात्रमात्मप्राप्तौ साधन-मुपदिश्यते । मार्गविज्ञानोपदेशवदिति चेत्तदात्मत्वे विद्यामात्रसाधनोपदेशोऽ-हेतुः । कस्मात् । देशान्तरप्राप्तौ मार्गविज्ञानोपदेशदर्शनात् । न हि ग्राम एव गन्तेति चेत् । न, वैधर्म्यात् । तत्र हि ग्रामविषयं विज्ञानं नोपदिश्यते, तत्प्रा-प्तिमार्गविषयमेवोपदिश्यते विज्ञानं, न तथेह ब्रह्मविज्ञानव्यतिरेकेण साधनान्तर-विषयं विज्ञानमुपदिश्यते । उक्तकर्मादिसाधनापेक्षं ब्रह्मविज्ञानं परप्राप्तौ साधनमु-पदिश्यत इति चेत् । न । नित्यत्वान्मोक्षस्येत्यादिना प्रत्युक्तत्वात् । श्रुतिश्च 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति कार्यस्य तदात्मत्वं दर्शयति । अभयप्रतिष्ठोपपत्तेश्च यदि हि विद्यावान्स्वात्मनोऽन्यन्न पश्यति ततोऽभयं प्रतिष्ठां विन्दत इति स्याद्भयहेतोः परस्यान्यस्याभावात् । अन्यस्य चाविद्याकृतत्वे विद्यया अवस्तुत्व-दर्शनोपपत्तिः । तद्धि द्वितीयस्य चन्द्रस्यासत्त्वं यदतैमिरिकेण चक्षुष्मता न गृह्यते । नैवं न गृह्यत इति चेन्न । सुप्तसमाहितयोरग्रहणात् । सुषुप्तेऽग्रहण-मन्यासक्तवदिति चेत् न । सर्वाग्रहणात् । जाग्रत्स्वप्नयोरन्यस्य ग्रहणात्सत्त्वमेवे-ति चेत् । न । अविद्याकृतत्वाज्जाग्रत्स्वप्नयोः । यदन्यग्रहणं जाग्रत्स्वप्नयोस्तद-विद्याकृतं विद्याभावेऽभावात् । सुषुप्तेऽग्रहणमप्यविद्याकृतमिति चेत् । न । स्वाभाविकत्वात् । द्रव्यस्य हि तत्त्वमविक्रिया, परानपेक्षत्वात् । विक्रिया न तत्त्वं, परापेक्षत्वात् । नहि कारकापेक्षं वस्तुनस्तत्त्वं, सतो विशेषः कारकापेक्षो, विशेषश्च विक्रिया । जाग्रत्स्वप्नयोश्च ग्रहणं विशेषः । यद्धि यस्य नान्यापेक्षं स्वरूपं, तत्तस्य तत्त्वं, यदन्यापेक्षं न तत्तत्त्वम् । अन्याभावेऽभावात् । तस्मा-त्स्वाभाविकत्वाज्जाग्रत्स्वप्नवन्न सुषुप्ते विशेषः ।

येषां पुनरीश्वरोऽन्य आत्मनः कार्यं चान्यत्तेषां भयानिवृत्तिः, भयस्यान्य-निमित्तत्वात् सतश्चान्यस्यात्महानानुपपत्तिः । न चासत आत्मलाभः । सापेक्ष-

स्यादन्यस्य भयहेतुत्वमिति चेन्न । तस्यापि तुल्यत्वात् । यद्धर्माद्यनुसहायीभूतं नित्यमनित्यं वा निमित्तमपेक्ष्यान्यद्भयकारणं स्यात्, तस्यापि तथाभूतस्य आत्महानाभावाद्भयानिवृत्तिः आत्महाने वा सदसतोरितरेतरापत्तौ सर्वत्रानाश्वास एव एकत्वपक्षे ( १ ) पुनः सनिमित्तस्य संसारस्याविद्याकल्पितत्वाददोषः । तैमिरिकदृष्टस्य हि द्वितीयचन्द्रस्य नात्मलाभो नाशो वास्ति । विद्याविद्ययोस्तद्धर्मत्वमिति चेन्न । प्रत्यक्षत्वात् । विवेकाविवेकौ रूपादिवत्प्रत्यक्षावुपलभ्येते अन्तःकरणस्थौ । नहि रूपस्य प्रत्यक्षस्य सतो द्रष्टृधर्मत्वम् । अविद्या च स्वानुभवेन रूप्यते मूढोऽहमविविक्तं मम विज्ञानमिति । तथा विद्याविवेकोऽनुभूयते । उपदिशन्ति चान्येभ्य आत्मनो विद्यां बुधाः । तथा चान्येऽवधारयन्ति । तस्मान्नामरूपपक्षस्यैव विद्याविद्ये नामरूपे च, नात्मधर्मौ । "नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति श्रुत्यन्तरात् । ते च पुनर्नामरूपे सवितर्यहोरात्रे इव कल्पिते न परमार्थतो विद्यमाने । अभेदे 'एतमानन्दमयमात्मानमुपसङ्क्रामति' इति कर्मकर्तृत्वानुपपत्तिरिति चेन्न । विज्ञानमात्रत्वात्सङ्क्रमणस्य । न जलूकादिवत्सङ्क्रमणमिहोपदिश्यते, किं तर्हि विज्ञानमात्रं सङ्क्रमणश्रुतेरर्थः । ननु मुख्यमेव सङ्क्रमणं श्रूयते उपसङ्क्रामति इति चेत् । न । अन्नमयेऽदर्शनात् । न ह्यन्नमयमुपसङ्क्रामतो बाह्यादस्माल्लोकाज्जलूकावत्सङ्क्रमणं दृश्यते न्यथा वा । मनोमयस्य बहिर्निर्गतस्य विज्ञानमयस्य वा पुनः प्रत्यावृत्त्या आत्मसङ्क्रमणमिति चेत् । न स्वात्मनि क्रियाविरोधात्, अन्योऽन्नमयमन्यमुपसङ्क्रामतीति प्रकृत्य मनोमयो विज्ञानमयो वा स्वात्मानमेवोपसङ्क्रामतीति विरोधः स्यात् । तथा नानन्दमयस्यात्मसङ्क्रमणमुपपद्यते । तस्मान्न प्राप्तिः सङ्क्रमणं, नाप्यन्नमयादीनामन्यतमकर्तृकं पारिशेष्यात् अन्नमयाद्यानन्दमयान्तात्मव्यतिरिक्तकर्तृकं ज्ञानमात्रं च सङ्क्रमणमुपपद्यते । ज्ञानमात्रत्वे चानन्दमयान्तःस्थस्यैव सर्वान्तरस्य आकाशाद्यन्नमयान्तं कार्यं सृष्ट्वानुप्रविष्टस्य हृदयगुहाभिसम्बन्धादन्नमयादिष्वनात्मस्वात्मविभ्रमः सङ्क्रमणेनात्मविवेकविज्ञानोत्पत्त्या विनश्यति । तदेतस्मिन्नविद्याविभ्रमनाशे सङ्क्रमणशब्द उपचर्यते, न ह्यन्यथा सर्वगतस्यात्मनः सङ्क्रमणमुपपद्यते । वस्त्वन्तराभावाच्च । न च स्वात्मन एव

( १ ) स्वपक्षे इत्यध्याहारः कर्तव्यः ।

सङ्क्रमणम् । नहि जलूका आत्मानमेव सङ्क्रामति । तस्मात्सत्यं ज्ञानमनन्तं ब्रह्मेति यथोक्तलक्षणात्मप्रतिपत्त्यर्थमेव बहुभवनसर्गप्रवेशरसलाभाभयसङ्क्रमणादि परिकल्प्यते ब्रह्मणि सर्वव्यवहाराविषये, न तु परमार्थतो निर्विकल्पे ब्रह्मणि कश्चिदपि विकल्प उपपद्यते । तमेतं निर्विकल्पमात्मानमेवं क्रमेणोपसङ्क्रम्य विदित्वा न बिभेति कुतश्चन अभयम्प्रतिष्ठां विन्दत इत्येतस्मिन्नर्थेऽप्येष श्लोको भवति । सर्वस्यैवास्य प्रकरणस्यानन्दवल्ल्यर्थस्य संक्षेपतः प्रकाशनायैष मन्त्रो भवति । इति अष्टमोऽनुवाकः ॥ ८ ॥

**यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति । एतं ह वाव न तपति । किमहं साधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानं स्पृणुते । उभे ह्येवैष एते आत्मानं स्पृणुते । य एवं वेद । इत्युपनिषत् । इति नवमोऽनुवाकः ॥ ९ ॥ इति ब्रह्मवल्ली ।**

यतो यस्मान्निर्विकल्पात् यथोक्तलक्षणात् अद्वयानन्दादात्मनो, वाचोऽभिधानानि द्रव्यादिसविकल्पवस्तुविषयाणि वस्तुसामान्यान्निर्विकल्पेऽद्वयेऽपि ब्रह्मणि प्रयोक्तृभिः प्रकाशनाय प्रयुज्यमानानि, अप्राप्याप्रकाश्यैव निवर्तन्ते स्वसामर्थ्याद्धीयन्ते । मन इति प्रत्ययो विज्ञानम् । तच्च यत्राभिधानं प्रवृत्तमतीन्द्रियेऽप्यर्थे तदर्थे च प्रवर्तते प्रकाशनाय । यत्र च विज्ञानं तत्र वाचः प्रवृत्तिः । तस्मात्सहैव वाङ्मनसमोरभिधानप्रत्यययोः प्रवृत्तिः सर्वत्र । तस्मात् ब्रह्मप्रकाशनाय सर्वथा प्रयोक्तृभिः प्रयुज्यमाना अपि वाचो यस्मादप्रत्ययविषयात् अनभिधेयाददृश्यादिविशेषणात्सहैव मनसा विज्ञानेन सर्वप्रकाशनसमर्थेन निवर्तन्ते, तं ब्रह्मण आनन्दं श्रोत्रियस्यावृजिनस्याकामहतस्य सर्वैषणाविनिर्मुक्तस्यात्मभूतं विषयविषयिसम्बन्धविनिर्मुक्तं स्वाभाविकं नित्यमविभक्तं परमानन्दं ब्रह्मणो विद्वान्यथोक्तेन विधिना न बिभेति कुतश्चन । निमित्ताभावात् । नहि तस्माद्विदुषोऽन्यद्वस्त्वन्तरमस्ति भिन्नं यतो बिभेति । अविद्यया यदोदरमन्तरं कुरुते अथ तस्य भयं भवतीति युक्तम् । विदुषश्चाविद्याकार्यस्य तैमिरिकदृष्टद्वि-

तस्यिचन्द्रवभाशाद्भयनिमित्तस्य न बिभेति कुतश्चनेति युज्यते। मनोमये चोदाहृतो मन्त्रो मनसो ब्रह्मविज्ञानसाधनत्वात्। तत्र ब्रह्मत्वमध्यारोप्य तत्स्तुत्यर्थं न बिभेति कदाचनेति भयमात्रं प्रतिषिद्धम्। इहाद्वैतविषये न बिभेति कुतश्चनेति भयनिमित्तमेव प्रतिषिध्यते।

नन्वस्ति भयनिमित्तं साध्वकरणं पापक्रिया च। नैवम्। कथमित्युच्यते— एतं यथोक्तमेवंविदम्। ह वावेत्यवधारणार्थौ। न तपति नोद्वेजयति न सन्तापयति। कथं पुनः साध्वकरणं पापक्रिया च न तपतीत्युच्यते। किं कस्मात्साधु शोभनं कर्म नाकरवं न कृतवानस्मीति पश्चात्सन्तापो भवत्यासन्ने मरणकाले। तथा किं कस्मात्पापं प्रतिषिद्धं कर्माकरवं कृतवानस्मीति च नरकपतनादिदुःखभयात्तापो भवति। ते एते साध्वकरणपापक्रिये एवमेनं न तपतो, यथा अविद्वांसन्तपतः। कस्मात्पुनर्विद्वांसं न तपत इत्युच्यते—स य एवं विद्वानेते साध्वसाधुनी तापहेतू इत्यात्मानं स्पृणुते प्रीणयति बलयति वा, परमात्मभावेनोभे पश्यतीत्यर्थः। उभे पुण्यपापे हि यस्मादेवमेष विद्वानेते आत्मानमात्मरूपेणैव पुण्यपापे स्वेन विशेषरूपेण शून्ये कृत्वा आत्मानं स्पृणुत एव। कः? य एवं वेद यथोक्तमद्वैतमानन्दं ब्रह्म वेद, तस्यात्मभावेन दृष्टे पुण्यपापे निर्वीर्ये अतापके जन्मान्तरारम्भके न भवतः। इतीयमेवं यथोक्ता अस्यां वल्ल्यां ब्रह्मविद्योपनिषत्सर्वाभ्यो विद्याभ्यः परमरहस्यं दर्शितमित्यर्थः। परं श्रेयोऽस्यां निषण्णमिति॥ ९॥ इति ब्रह्मवल्ल्यध्यायः॥

ॐ। सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः।

---

## भृगुवल्ली ॥ ३ ॥

ॐ। सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥

---

'सत्यं ज्ञानमनन्तं ब्रह्म' आकाशादिकार्यमन्नमयान्तं सृष्ट्वा तदेवानुप्रविष्टं विशेषवदिवोपलभ्यमानं यस्मात्तस्मात्सर्वकार्यविलक्षणं अदृश्यादिधर्मकमेवानन्दं तदेवाहमिति विजानीयादनुप्रवेशस्य तदर्थत्वात्। तस्यैवं विजानतः शुभाशुभे कर्मणी जन्मान्तरारम्भके न भवतः इत्येवमानन्दवल्ल्यां विवक्षितोऽर्थः । परिसमाप्ता च ब्रह्मविद्या। अतः परं ब्रह्मविद्यासाधनं तपो वक्तव्यं, अन्नादिविषयाणि चोपासनान्यनुक्तानीत्यत इदमारभ्यते—

**भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तं होवाच । यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति । स तपोऽतप्यत। स तपस्तप्त्वा ॥ इति प्रथमोऽनुवाकः ॥ १ ॥**

आख्यायिका विद्यास्तुतये, प्रियाय पुत्राय पित्रोक्तेति भृगुर्वै वारुणिः। वैशब्दः प्रसिद्धानुस्मारको, भृगुरित्येवन्नामा प्रसिद्धोऽनुस्मार्यते । वारुणिर्वरुणस्यापत्यं वारुणिर्वरुणं पितरं ब्रह्म विजिज्ञासुरुपससारोपगतवान्। अधीहि भगवो ब्रह्मेत्यनेन मन्त्रेण। अधीहि अध्यापय कथय । स च पिता विधिवदुपसन्नाय तस्मै पुत्रायैतद्वचनं प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। अन्नं शरीरं तदभ्यन्तरं च प्राणमत्तारं उपलब्धिसाधनानि चक्षुः श्रोत्रं मनो वाचमित्येतानि ब्रह्मोपलब्धौ द्वाराण्युक्तवान् । उक्त्वा च द्वारभूतान्येतान्यन्नादीनि तं भृगुं होवाच ब्रह्मणो लक्षणम् । किं तत्। यतो यस्माद्वा इमानि ब्रह्मादीनि स्तम्बपर्यन्तानि भूतानि जायन्ते । येन जातानि जीवन्ति प्राणान्धारयन्ति वर्धन्ते। विनाशकाले च यत्प्रयन्ति यद्ब्रह्म प्रतिगच्छन्ति, अभिसंविशन्ति तादात्म्यमेव प्रतिपद्यन्ते। उत्पत्तिस्थितिलयकालेषु यदात्मतां न जहति भूतानि तदेतद्ब्रह्मणो लक्षणम्। तद्ब्रह्म विजिज्ञासस्व विशेषेण ज्ञातुमिच्छस्व । यदेवंलक्षणं ब्रह्म तदन्नादिद्वारेण प्रतिपद्यस्वेत्यर्थः। श्रुत्यन्तरं च—'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुस्ते निचिक्युर्ब्रह्म

पुराणमध्यम्' इति ब्रह्मोपलब्धौ द्वाराण्येतानीति दर्शयति । स भृगुर्ब्रह्मोपलब्धिद्वाराणि ब्रह्मलक्षणं च श्रुत्वा पितुः तपो ब्रह्मोपलब्धिसाधनत्वेनातप्यत तप्तवान् । कुतः पुनरनुपदिष्टमेव तपसः साधनत्वप्रतिपत्तिर्भृगोः ? सावशेषोक्तेः । अन्नादिब्रह्मणः प्रतिपत्तौ द्वारं लक्षणं च 'यतो वा इमानी'त्याद्युक्तवान् । सावशेषं हि तत्साक्षाद्ब्रह्मणोऽनिर्देशात् । अन्यथा हि स्वरूपेणैव ब्रह्म निर्देष्टव्यं जिज्ञासवे पुत्रायेदमित्थंरूपं ब्रह्मेति । न चैवं निरदिशत्किं तर्हि सावशेषमेवोक्तवान् । अतोऽवगम्यते नूनं साधनान्तरमप्यपेक्षते पिता ब्रह्मविज्ञानं प्रतीति । तपोविशेषप्रतिपत्तिस्तु सर्वसाधकतमत्वात् । सर्वेषां हि नियतसाध्यविषयाणां साधनानां तप एव साधकतमं साधनमिति हि प्रसिद्धं लोके । तस्मात्पित्रा अनुपदिष्टमपि ब्रह्मविज्ञानसाधनत्वेन तपः प्रतिपेदे भृगुः । तच्च तपो बाह्यान्तःकरणसमाधानं, तद्द्वारकत्वाद्ब्रह्मप्रतिपत्तेः । "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः । तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते" इति स्मृतेः । स च तपस्तप्त्वा ॥ १ ॥

**अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तं होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥**

अन्नं ब्रह्मेति व्यजानाद्विज्ञातवान् । तद्धि यथोक्तलक्षणोपेतम् । कथम् ? अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तस्माद्युक्तमन्नस्य ब्रह्मत्वमित्यभिप्रायः । स एवं तपस्तप्त्वा अन्नं ब्रह्मेति विज्ञाय लक्षणेनोपपत्त्या च पुनरेव संशयमापन्नो वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । कः पुनः संशयहेतुरस्येत्युच्यते — अन्नस्योत्पत्तिदर्शनात् । तपसः पुनः पुनरुपदेशः साधनातिशयत्वावधारणार्थः । यावद्ब्रह्मणो लक्षणं निरतिशयं न भवति यावच्च जिज्ञासा न निवर्तते तावत्तप एव ते साधनम् । तपसैव ब्रह्म विजिज्ञासस्वेत्यर्थः । ऋज्वन्यत् ॥ २-३-४-५ ॥

प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तं होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । इति तृतीयोऽनुवाकः ॥ ३ ॥

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तं होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । इति चतुर्थोऽनुवाकः ॥ ४ ॥

विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तं होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । इति पञ्चमोऽनुवाकः ॥ ५ ॥

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता । स य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥ इति षष्ठोऽनुवाकः ॥ ६ ॥

एवं तपसा विशुद्धात्मा प्राणादिषु साकल्येन ब्रह्मलक्षणमपश्यन् शनैः शनैरन्तरनुप्रविश्य अन्तरतममानन्दं ब्रह्म विज्ञातवान्स्तपसैव साधनेन भृगुः ।

तस्माद्ब्रह्म विजिज्ञासुना बाह्यान्तःकरणसमाधानलक्षणं परमं तपः साधनमनुष्ठेयमिति प्रकरणार्थः । अधुनाख्यायिकां चोपसंहृत्य श्रुतिः स्वेन वचनेनाख्यायिकानिर्वृत्तमर्थमाचष्टे— सैषा भार्गवी भृगुणा विदिता वरुणेन प्रोक्ता वारुणी विद्या परमे व्योमन्हृदयाकाशगुहायां परम आनन्देऽद्वैते प्रतिष्ठिता परिसमाप्ता अन्नमयादात्मनोऽधिप्रवृत्ता । य एवमन्योऽपि तपसैव साधनेनानेनैव क्रमेणानुप्रविश्यानन्दं ब्रह्म वेद स एवं विद्याप्रतिष्ठानात्प्रतितिष्ठत्यानन्दे परमे ब्रह्मणि, ब्रह्मैव भवतीत्यर्थः । दृष्टं च फलं तस्योच्यते—अन्नवानन्नभूतमन्नमस्य विद्यत इत्यन्नवान् । सत्तामात्रेण तु सर्वो ह्यन्नवानिति विद्याया विशेषो न स्यात् । एवमन्नमत्तीत्यन्नादो दीप्ताग्निर्भवतीत्यर्थः । महान्भवति । केन महत्त्वमित्यत आह— प्रजया पुत्रादिना पशुभिर्गवाश्वादिभिर्ब्रह्मवर्चसेन शमदमज्ञानादिनिमित्तेन तेजसा । महान्भवति कीर्त्या ख्यात्या शुभाचारनिमित्तया ॥ ६ ॥

**अन्नं न निन्द्यात् । तद्व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥ इति सप्तमोऽनुवाकः ॥ ७ ॥**

किञ्चान्नेन द्वारभूतेन ब्रह्म विज्ञातं यस्मात्तस्मात् गुरुमिवान्नं ( १ ) न निन्द्यात् । तदस्यैव ब्रह्मविदो व्रतमुपदिश्यते । व्रतोपदेशोऽन्नस्तुतये, स्तुतिभाक्त्वं चान्नस्य ब्रह्मोपलब्ध्युपायत्वात् । प्राणो वा अन्नम् । शरीरान्तर्भावात्प्राणस्य । यद्यस्यान्तः प्रतिष्ठितं भवति तत्तस्यान्नं भवतीति । शरीरे च प्राणः प्रतिष्ठितस्तस्मात्प्राणोऽन्नं शरीरमन्नादम् । तथा शरीरमप्यन्नं प्राणोऽन्नादः । कस्मा प्राणे शरीरं प्रतिष्ठितम् ? तन्निमित्तत्वाच्छरीरस्थितेः । तस्मात्तदेतदुभयं शरीरं प्राणश्चान्नमन्नादश्च । येनान्योन्यस्मिन्प्रतिष्ठितं तेनान्नम् । येनान्योन्यस्य प्रतिष्ठा तेनान्नादः । तस्मात्प्राणः शरीरं चोभयमन्नमन्नादं च । स य एवमेतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठत्यन्नान्नादात्मनैव । किञ्चान्नवानन्नादो भवतीत्यादि पूर्ववत् ॥ ७ ॥

( १ ) अन्नं न निन्द्यादिति—अन्नमपकृष्टं प्राप्तं न निन्द्यात् । 'यदृच्छया चोपपन्नमद्याच्छ्रेष्ठमुतावरमित्युक्तत्वात् । ब्रह्मविदो नियमाभिधानं साधकस्यानुष्ठानार्थम् ।

**अन्नं न परिचक्षीत। तद्व्रतम्। आपो वा अन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या॥ इति अष्टमोऽनुवाकः॥ ८॥**

अन्नं न परिचक्षीत न परिहरेत्। तद्व्रतं पूर्ववत्स्तुत्यर्थम्। तदेवं शुभाशुभकल्पनया अपरिहीयमाणं स्तुतं महीकृतमन्नं स्यात्। एवं यथोक्तमुत्तरेष्वप्यापो वा अन्नमित्यादिषु योजयेत्॥ ८॥

**अन्नं बहु कुर्वीत। तद्व्रतम्। पृथिवी वा अन्नम्। अकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या॥ इति नवमोऽनुवाकः॥ ९॥**

अप्सु ज्योतिरित्यब्ज्योतिषोरन्नान्नादगुणत्वेनोपासकस्यान्नस्य बहुकरणं व्रतम्॥ ९॥

**न कञ्चन वसतौ प्रत्याचक्षीत। तद्व्रतम्। तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्। अराध्यस्मा अन्नमित्याचक्षते। एतद्वै मुखतोऽन्नं राद्धम्। मुखतोऽस्मा अन्नं राध्यते। एतद्वै मध्यतोऽन्नं राद्धम्। मध्यतोऽस्मा अन्नं राध्यते। एतद्वा अन्ततोऽन्नं राद्धम्। अन्ततोऽस्मा अन्नं राध्यते॥ १॥**

तथा पृथिव्याकाशोपासकस्य वसतौ वसतिनिमित्तं कञ्चन कञ्चिदपि न प्रत्याचक्षीत वसत्यर्थमागतं न निवारयेदित्यर्थः। वासे च दत्तेऽवश्यं ह्यशनं दातव्यम्। तस्माद्यया कया च विधया येन येन च प्रकारेण बह्वन्नं प्राप्नुयाद्बह्वन्नसंग्रहं (१) कुर्यादित्यर्थः। यस्मादन्नवन्तो विद्वांसोऽभ्यातायान्नार्थिनेऽराधि

---

(१) याचनाद्यन्यतमेनेत्यर्थः।

संसिद्धमस्मा अन्नमित्याचक्षते, न नास्तीति प्रत्याख्यानं कुर्वन्ति, तस्माच्च हेतोर्बह्वन्नं प्राप्नुयादिति पूर्वेण सम्बन्धः। अपि चान्नदानस्य माहात्म्यमुच्यते। यथा यत्कालं प्रयच्छत्यन्नं तथा तत्कालमेव प्रत्युपनमते। कथमिति तदेतदाह एतद्वै अन्नं मुखतो मुख्ये प्रथमे वयसि मुख्यया वा वृत्त्या पूजापुरःसरमभ्यागतायान्नार्थिने राद्धं संसिद्धं प्रयच्छतीति वाक्यशेषः। तस्य किं फलं स्यादित्युच्यते--मुखतः पूर्वे वयसि मुख्यया वा वृत्त्यास्मै अन्नदायान्नं राध्यते, यथादत्तमुपतिष्ठत इत्यर्थः। एवं मध्यतो मध्यमे वयसि मध्यमेन चोपचारेण। तथान्ततोऽन्ते वयसि जघन्येन चोपचारेण परिभवेन तथैवास्मै राध्यते संसिध्यत्यन्नम् ॥ १ ॥

**क्षेम इति वाचि। योगक्षेम इति प्राणापानयोः। कर्मेति हस्तयोः। गतिरिति पादयोः। विमुक्तिरिति पायौ। इति मानुषीः समाज्ञाः। अथ दैवीः। तृप्तिरिति वृष्टौ। बलमिति विद्युति ॥ २ ॥**

य एवं वेद य एवमन्नस्य यथोक्तं माहात्म्यं वेद तद्दानस्य च फलं तस्य यथोक्तं फलमुपनमते। इदानीं ब्रह्मण उपासनप्रकार उच्यते—क्षेम इति वाचि। क्षेमो नामोपात्तपरिरक्षणम्। ब्रह्म वाचि क्षेमरूपेण प्रतिष्ठितमित्युपास्यम्। योगक्षेम इति, योगोऽनुपात्तस्योपादानम्। तौ हि योगक्षेमौ प्राणापानयोः सतोः भवतो यद्यपि, तथापि न प्राणापाननिमित्तावेव, किं तर्हि ब्रह्मनिमित्तौ। तस्माद्ब्रह्म योगक्षेमात्मना प्राणापानयोः प्रतिष्ठितमित्युपास्यम्। एवमुत्तरेष्वन्येषु तेन तेनात्मना ब्रह्मैवोपास्यम्। कर्मणो ब्रह्मनिर्वर्त्यत्वाद्धस्तयोः कर्मात्मना ब्रह्म प्रतिष्ठितमित्युपास्यम्। गतिरिति पादयोः। विमुक्तिरिति पायौ। इत्येता मानुषीर्मनुष्येषु भवा मानुष्यः समाज्ञाः आध्यात्मिक्यः समाज्ञा ज्ञानानि विज्ञानान्युपासनानीत्यर्थः। अथानन्तरं दैव्यो देवेषु भवाः समाज्ञा उच्यन्ते। तृप्तिरिति वृष्टौ। वृष्टेरन्नादिद्वारेण तृप्तिहेतुत्वाद्ब्रह्मैव तृप्त्यात्मना वृष्टौ व्यवस्थितमित्युपास्यम्। तथान्येषु तेन तेनात्मना ब्रह्मैवोपास्यम्। तथा बलरूपेण विद्युति ॥ २ ॥

**यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान्भवति । तन्मह इत्युपासीत । महान्भवति । तन्मन इत्युपासीत । मानवान् भवति ॥ ३ ॥**

यशोरूपेण पशुषु । ज्योतीरूपेण नक्षत्रेषु । प्रजातिरमृतममृतत्वप्राप्तिः पुत्रेण ऋणविमोक्षद्वारेणानन्दः सुखमित्येतत्सर्वमुपस्थनिमित्तं ब्रह्मैवानेनात्मनोपस्थे प्रतिष्ठितमित्युपास्यम् । सर्वं ह्याकाशे प्रतिष्ठितमतो यत्सर्वमाकाशे तद्ब्रह्मैवेत्युपास्यम् । तच्चाकाशं ब्रह्मैव । तस्मात्तत्सर्वस्य प्रतिष्ठेत्युपासीत । प्रतिष्ठागुणोपासनात्प्रतिष्ठावान्भवति । एवं पूर्वेष्वपि यद्यत्राधीतं फलं तद्ब्रह्मैव तदुपासनात्तद्वान्भवतीति द्रष्टव्यम् । श्रुत्यन्तराच्च — 'तं यथा यथोपासते तदेव भवति' इति । तन्मह इत्युपासीत । महो महत्त्वगुणवत्तदुपासीत । महान्भवति । तन्मन इत्युपासीत । मननं मनः । मानवान्भवति मननसमर्थो भवति ॥ ३ ॥

**तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति । तद्ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः ॥ ४ ॥**

तन्नम इत्युपासीत । नमनं नमो नमनगुणवत्तदुपासीत । नम्यन्ते प्रह्वीभवन्त्यस्मा उपासित्रे कामाः काम्यन्त इति भोग्या विषया इत्यर्थः तद्ब्रह्मेत्युपासीत । ब्रह्म परिवृढतममित्युपासीत । ब्रह्मवांस्तद्गुणो भवति । तद्ब्रह्मण परिमर इत्युपासीत । ब्रह्मणः परिमरः परिम्रियन्तेऽस्मिन्पञ्च देवता विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निरित्येताः । अतो वायुः परिमरः, श्रुत्यन्तरप्रसिद्धेः । स एष एवायं वायुराकाशेनानन्य इत्याकाशो ब्रह्मणः परिमरः, तस्मादाकाशं वाय्वात्मानं ब्रह्मणः परिमर इत्युपासीत । पर्येनमेवंविदं प्रतिस्पर्धिनो द्विषन्तोऽद्विषन्तोऽपि सपत्ना यतो भवन्त्यतो विशेष्यन्ते द्विषन्तः सपत्ना इति । य एनं द्विषन्तः सपत्नाः ते परिम्रियन्ते प्राणान् जहति । किञ्च ये चाप्रिया अस्य भ्रातृव्या अद्विषन्तोऽपि ते च परिम्रियन्ते ।

प्राणो वा अन्नं शरीरमन्नादमित्यारभ्याकाशान्तस्य कार्यस्यैवान्नान्नादत्वमुक्तम्। उक्तं नाम किं तेन, तेनैतत्सिद्धं भवति, कार्यविषय एव भोज्यभोक्तृत्वकृतः संसारो न त्वात्मनीति। आत्मनि तु भ्रान्त्योपचर्यते। ननु आत्मापि परमात्मनः कार्यं ततो युक्तस्तस्य संसार इति। न। असंसारिण एव प्रवेशश्रुतेः। 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्याकाशादिकारणस्य ह्यसंसारिण एव परमात्मनः कार्येष्वनुप्रवेशः श्रूयते। तस्मात्कार्यानुप्रविष्टो जीव आत्मा पर एवासंसारी। सृष्ट्वानुप्राविशदिति समानकर्तृत्वोपपत्तेश्च। सर्गप्रवेशक्रिययोश्चैकश्चेत्कर्ता ततः क्त्वाप्रत्ययो युक्तः। प्रविष्टस्य तु भावान्तरापत्तिरिति चेत्। न। प्रवेशस्यान्यार्थत्वेन प्रत्याख्यातत्वात्। अनेन जीवेनेति विशेषश्रुतेर्धर्मान्तरेणानुप्रवेश इति चेत्। न। तत्त्वमसीति पुनस्तद्भावोक्तेः। भावान्तरापन्नस्यैव तदपोहार्था सम्पदिति चेत्। न। तत्सत्यं स आत्मा तत्त्वमसीति सामानाधिकरण्यात्। दृष्टं जीवस्य संसारित्वमिति चेत्। न। उपलब्धुरनुपलभ्यत्वात्। संसारधर्मविशिष्ट आत्मोपलभ्यत इति चेत्। न। धर्माणां धर्मिणोऽव्यतिरेकात्कर्मत्वानुपपत्तेः। उष्णप्रकाशयोर्दाह्यप्रकाश्यत्वानुपपत्तिवत्। त्रासादिदर्शनात् दुःखित्वाद्यनुमीयत इति चेत्। न। त्रासादेर्दुःखस्य चोपलभ्यमानत्वान्नोपलब्धृधर्मत्वम्। कापिलकाणादादितर्कशास्त्रविरोध इति चेत्। न। तेषां मूलाभावे वेदविरोधे च भ्रान्तत्वोपपत्तेः। श्रुत्युपपत्तिभ्यां च सिद्धमात्मनोऽसंसारित्वं, एकत्वाच्च। कथमेकत्वमित्युच्यते—स यश्चायं पुरुषे यश्चासावादित्ये स एकः इत्येवमादि पूर्ववत् सर्वम्॥ ४॥

**स य एवंवित्। अस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसङ्क्रम्य। एतं प्राणमयमात्मानमुपसङ्क्रम्य। एतं मनोमयमात्मानमुपसङ्क्रम्य। एतं विज्ञानमयमात्मानमुपसङ्क्रम्य। एतमानन्दमयमात्मानमुपसङ्क्रम्य। इमाँल्लोकान्कामान्नी कामरूप्यनुसञ्चरन्। एतत्साम गायन्नास्ते हा३वु हा३वु हा३वु॥ ५॥**

अन्नमयादिक्रमेण आनन्दमयमात्मानमुपसङ्क्रम्य तत्साम गायन्नास्ते। सत्यं ज्ञानमित्यस्या ऋचोऽर्थो व्याख्यातो विस्तरेण तद्विवरणभूतया आनन्दवल्ल्या।

'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इति तस्य फलवचनस्यार्थविस्तारो नोक्तः । के ते, किंविषया वा सर्वे कामाः, कथं वा ब्रह्मणा सह समश्नुते, इत्येतद्वक्तव्यमितीदमिदानीमारभ्यते । तत्र पितापुत्राख्यायिकायां पूर्वविद्याशेषभूतायां तपो ब्रह्मविद्यासाधनमुक्तम् । प्राणादेराकाशान्तस्य च कार्यस्यान्नान्नादत्वेन विनियोगश्चोक्तः । ब्रह्मविषयोपासनानि च । ये च सर्वे कामाः प्रतिनियतानेकसाधनसाध्या आकाशादिकार्यभेदविषया एते दर्शिताः । एकत्वे पुनः कामकामित्वानुपपत्तिः । भेदजातस्य सर्वस्यात्मभूतत्वात् । तत्र कथं युगपद्ब्रह्मस्वरूपेण सर्वान्कामानेवंवित्समश्नुत इत्युच्यते—सर्वात्मत्वोपपत्तेः । कथं सर्वात्मत्वोपपत्तिरित्याह — पुरुषादित्यस्थात्मैकत्वविज्ञानेनापोह्योत्कर्षापकर्षावन्नमयादीनात्मनोऽविद्याकल्पितान्क्रमेण सङ्क्रम्य आनन्दमयान्तान्सत्यं ज्ञानमनन्तं ब्रह्मादृश्यादिधर्मकं स्वाभाविकमानन्दमजममृतमभयमद्वैतं फलभूतमापन्न इमाँल्लोकान्भूरादीननुसञ्चरन्निति व्यवहितेन सम्बन्धः । कथमनुसञ्चरन् । कामान्नी कामतोऽन्नमस्येति कामान्नी । तथा कामतो रूपाण्यस्येति कामरूपी । अनुसञ्चरन्सर्वात्मनेमाँल्लोकानात्मत्वेनानुभवन् । किम्, एतत्साम गायन्नास्ते । समत्वात् ब्रह्मैव साम सर्वानन्यरूपं गायन् शब्दयन्नात्मैकत्वं प्रख्यापयँल्लोकानुग्रहार्थं तद्विज्ञानफलं चातीव कृतार्थत्वं गायन्नास्ते तिष्ठति । कथम् । हाऽवु हाऽवु हाऽवु । अहो इत्येतस्मिन्नर्थेऽत्यन्तविस्मयख्यापनार्थम् ॥ ५ ॥

**अहमन्नमहमन्नमहमन्नम् । अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः । अहं श्लोककृदहं (१) श्लोककृदहं श्लोककृत् । अहमस्मि प्रथमजा ऋता३स्य पूर्वं देवेभ्यो अमृतस्य ना३भायि । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्नमदन्तमा३द्मि । अहं विश्वं भुवनमभ्यभवा३म् । सुवर्न ज्योतीः । य एवं वेद । इत्युपनिषत् ॥ ६ ॥ इति दशमोऽनुवाकः ॥ इति भृगुवल्ली ॥ इति तैत्तिरीयोपनिषत् ॥**

कः पुनरसौ विस्मय इत्युच्यते—अद्वैत आत्मा निरञ्जनोऽपि सन्नहमेवान्नमन्नादश्च । किञ्चाहमेव श्लोककृत् । श्लोको नामान्नान्नादयोः सङ्घातस्तस्य कर्ता

(१) श्लोकः कीर्तिः तां करोतीति श्लोककृत् ।

चेतनावान् । अन्नस्यैव वा परार्थस्यान्नादार्थस्य सतोऽनेकात्मकस्य पारार्थ्येन हेतुना संहातकृत् । त्रिरुक्तिर्विस्मयत्वख्यापनार्था । अहमस्मि भवामि । प्रथमजाः प्रथमजः प्रथमोत्पन्नः । ऋतस्य सत्यस्य मूर्तामूर्तस्यास्य जगतो देवेभ्यश्च पूर्वममृतस्य नाभिः अमृतत्वस्य नाभिर्मध्यं मत्संस्थममृतत्वं प्राणिनामित्यर्थः । यः कश्चिन्मामामन्नमन्नार्थिभ्यो ददाति प्रयच्छत्यन्नात्मना ब्रवीति स इत्थमेवमविनष्टं यथाभूतं मामावा अवतीत्यर्थः । यः पुनरन्यो मामदत्त्वा अर्थिभ्यः काले प्राप्तेऽन्नमत्ति तमन्नमदन्तं भक्षयन्तं पुरुषमहमन्नमेव सन्प्रत्यद्मि भक्षयामि । अत्राह—एवं तर्हि बिभेमि सर्वात्मत्वप्राप्तेर्मोक्षात् । अस्तु संसार एव यतो मुक्तोऽप्यहमन्नभूत अद्यः स्यामन्नस्य । एवं मा भैषीः संव्यवहारविषयत्वात्सर्वकामाशनस्य । अतीत्यायं संव्यवहारविषयं अन्नान्नादादिलक्षणमविद्याकृतं विद्यया ब्रह्मत्वमापन्नो विद्वांस्तस्य नैव द्वितीयं वस्त्वन्तरमस्ति यतो बिभेत्यतो न भेतव्यं मोक्षात् । एवं तर्हि किमिदमाह अहमन्नमहमन्नाद इति, उच्यते । योऽयमन्नान्नादादिलक्षणः संव्यवहारः कार्यभूतः स संव्यवहारमात्रमेव, न परमार्थवस्तु । स एवम्भूतोऽपि ब्रह्मनिमित्तो ब्रह्मव्यतिरेकेणासन्निति कृत्वा ब्रह्मविद्याकार्यस्य ब्रह्मभावस्य स्तुत्यर्थमुच्यते, अहमन्नमहमन्नमहमन्नं अहमन्नादोऽहमन्नादोऽहमन्नाद इत्यादि । अतो भयादिदोषगन्धोऽप्यविद्यानिमित्तोऽविद्योच्छेदाद्ब्रह्मभूतस्य नास्तीति । अहं विश्वं समस्तं भुवनं भूतैः संभजनीयं ब्रह्मादिभिर्भवन्तीति वास्मिन्भूतानीति भुवनं अभ्यभवामभिभवामि परेणेश्वरेण स्वरूपेण । सुवर्न ज्योतीः सुवरादित्यो, नकार उपमार्थे । आदित्य इव सकृद्विभातमस्मदीयं ज्योतिर्ज्योतिः प्रकाश इत्यर्थः । इति वल्लीद्वयविहितोपनिषत्परमात्मज्ञानं, तामेतां यथोक्तामुपनिषदं शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा भृगुवत्तपो महदास्थाय य एवं वेद तस्येदं फलं यथोक्तमोक्ष इति ॥ ६ ॥

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीशङ्करभगवतः कृतौ तैत्तिरीयोपनिषद्भाष्यं समाप्तम् ।



॥ ॐ ॥

# ऐतरेयोपनिषत् ।



परिसमाप्तं कर्म सहापरब्रह्मविषयविज्ञानेन । सैषा कर्मणो ज्ञानसहितस्य परा गतिरुक्थविज्ञानद्वारेणोपसंहृता । "एतत्सत्यं ब्रह्म प्राणाख्यम्" "एष एको देवः" "एतस्यैव प्राणस्य सर्वे देवा विभूतयः" "एतस्य प्राणस्यात्मभावं गच्छन्देवता अप्येति" इत्युक्तम् । सोऽयं देवताप्ययलक्षणः परः पुरुषार्थः । एष मोक्षः । स चायं यथोक्तेन ज्ञानकर्मसमुच्चयसाधनेन प्राप्तव्यो नातः परमस्तीत्येके प्रतिपन्नाः तान्निराचिकीर्षुरुत्तरं केवलात्मज्ञानविधानार्थं 'आत्मा वा इदं' इत्याद्याह ।

(१) कथं पुनरकर्मसम्बन्धिकेवलात्मविज्ञानविधानार्थ उत्तरो ग्रन्थ इति गम्यते ? अन्यार्थानवगमात् । तथा च पूर्वोक्तानां देवतानामग्न्यादीनां संसारित्वं दर्शयिष्यत्यशनायादिदोषवत्त्वेन 'तमशनापिपासाभ्यामन्ववार्जत्' [२.१] इत्यादिना । अशनायादिमत्सर्वं संसार एव, परस्य तु ब्रह्मणोऽशनायाद्यत्ययश्रुतेः । भवत्वेवं केवलात्मज्ञानं मोक्षसाधनं न त्वत्राकर्म्येवाधिक्रियते, विशेषा-

---

(१) कथं पुनरकर्मसम्बन्धीति–स विशेषविषयत्वे सत्यात्मविद्यायाः कर्मासम्बन्धोऽप्रसिद्ध इत्यभिप्रेत्योक्तमकर्मसम्बन्धीति । आत्मा वा इदमेक एवाग्र आसीदित्यद्वितीयात्मोपक्रमादेव ब्रह्मैव इन्द्र इत्याद्यनुक्रम्य सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितमिति प्रज्ञानशब्दितप्रत्यगात्माधिष्ठानत्वेन तद्व्यतिरेकेण ब्रह्मशब्दितहिरण्यगर्भादिप्रपञ्चस्याभावमुक्त्वा प्रज्ञानं ब्रह्मेत्यद्वितीयात्मनोपसंहाराद् स एतमेव पुरुषं ब्रह्म ततमपश्यदिति मध्येपरामर्शाद्ब्रह्मात्माद्वितीयत्वस्य मानान्तरागम्यत्वेनापूर्वत्वादमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवदिति स्वर्गशब्दितनिरतिशयसुखात्मकब्रह्मणैक्येन स्थितस्य तदंशभूतवैषयिकसर्वानन्दप्राप्तिलक्षणफलोक्तेः । सृष्ट्याद्यर्थवादाद् स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यतेति प्रवेशोक्तेः । तस्य त्रय आवसथाः त्रयः स्वप्ना इति जाग्रदाद्यवस्थात्रयस्य स्वप्नत्वेन मिथ्यात्वोक्त्युपपत्तेश्च ।

श्रवणात्। अकर्मिण आश्रम्यन्तरस्येहाश्रवणात्। कर्म च बृहतीसहस्रलक्षणं प्रस्तुत्यानन्तरमेवात्मज्ञानं प्रारभ्यते। तस्मात्कर्म्येवाधिक्रियते।

न च कर्मासम्बन्ध्यात्मविज्ञानं पूर्ववदन्त उपसंहारात्। यथा कर्मसम्बन्धिनः पुरुषस्य सूर्यात्मनः स्थावरजङ्गमादिसर्वप्राण्यात्मत्वमुक्तं ब्राह्मणेन मन्त्रेण च 'सूर्य आत्मा' इत्यादिना, तथैव 'एष ब्रह्मैष इन्द्रः' [५.३] इत्याद्युपक्रम्य सर्वं, प्राण्यात्मत्वम्। 'यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं' [५.३] इत्युपसंहरिष्यति। (१) तथा च संहितोपनिषदि-"एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते" इत्यादिना कर्मसम्बन्धित्वमुक्त्वा "सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते" इत्युपसंहरति। तथा तस्यैव 'योऽयमशरीरः प्रज्ञात्मा' इत्युक्तस्य 'यश्चासावादित्य एकमेव तदिति विद्यात्' इत्येकत्वमुक्तम्। इहापि 'कोऽयमात्मा' [५.१] इत्युपक्रम्य प्रज्ञात्मत्वमेव 'प्रज्ञानं ब्रह्म' [५.३] इति दर्शयिष्यति। तस्मान्नाकर्मसम्बन्ध्यात्मज्ञानम्।

पुनरुक्त्यानर्थक्यमिति चेत् कथं "प्राणो वा अहमस्म्यृषे" इत्यादिब्राह्मणेन "सूर्य आत्मा" इति च मन्त्रेण निर्धारितस्यात्मनः "आत्मा वा इदम्" इत्यादिब्राह्मणेन 'कोऽयमात्मा' [५.१] इति प्रश्नपूर्वकं पुनर्निर्धारणं पुनरुक्तमनर्थकमिति चेत्। न। तस्यैव धर्मान्तरविशेषनिर्धारणार्थत्वान्न पुनरुक्ततादोषः। कथम्, तस्यैव कर्मसम्बन्धिनो जगत्सृष्टिस्थितिसंहारादिधर्मविशेषनिर्धारणार्थत्वात् केवलोपास्यत्वार्थत्वाद्वा। अथवा आत्मेत्यादिपरो ग्रन्थसन्दर्भ आत्मनः कर्मिणः कर्मणोऽन्यत्रोपासनाप्राप्तौ कर्मप्रस्तावेऽविहितत्वाद्वा केवलोऽप्यात्मोपास्य इत्येवमर्थः। भेदाभेदोपास्यत्वाद्वा एक एवात्मा कर्मविषये भेददृष्टिभाक्। स एवाकर्मकाले भेदेनाप्युपास्य इत्येवमपुनरुक्तता। 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इति, 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति च वाजिनाम्। न च वर्षशतात्परमायुर्मर्त्यानां, येन कर्मपरित्यागेनात्मानमुपासीत। दर्शितं च "तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति" इति। वर्षशतं चायुः कर्मणैव व्याप्तम्। दर्शितश्च मन्त्रः 'कुर्वन्नेवेह कर्माणि' इत्यादि।

(१) तथा च संहितोपनिषदीत्यादि-तथा संहितोपनिषदि चेति चकारान्वयः। महत्युक्थे बृहतीसहस्राख्ये शस्त्र एतं प्रकृतमात्मानमृग्वेदिनो विचारयन्तीति श्रुत्यर्थः।

तथा "यावज्जीवमग्निहोत्रं जुहोति" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इत्याद्याश्च। "तं यज्ञपात्रैर्दहन्ति" इति च। ऋणत्रयश्रुतेश्च।

तत्र पारिव्राज्यादिशास्त्रं 'व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति आत्मज्ञानस्तुतिपरोऽर्थवादोऽनधिकृतार्थो वा। न, परमार्थविज्ञाने फलादर्शने क्रियानुपपत्तेः। यदुक्तं कर्मिण एव चात्मज्ञानं कर्मसम्बन्धि च इत्यादि तन्न। परं ह्याप्तकामं सर्वसंसारदोषवर्जितं ब्रह्माहमस्मीत्यात्मत्वेन विज्ञाने, कृतेन कर्तव्येन वा प्रयोजनमात्मनोऽपश्यतः फलादर्शने क्रिया नोपपद्यते। फलादर्शनेऽपि नियुक्तत्वात्करोतीति चेत्। न, नियोगाविषयात्मदर्शनात् इष्टयोगमनिष्टवियोगं वात्मनः प्रयोजनं पश्यंस्तदुपायार्थी यो भवति स नियोगस्य विषयो दृष्टो लोके, न तु तद्विपरीतनियोगाविषयब्रह्मात्मत्वदर्शी। ब्रह्मात्मत्वदर्श्यपि संश्चेन्नियुज्येत नियोगाविषयोऽपि सन्न कश्चिन्न नियुक्त इति सर्वं कर्म सर्वेण सर्वदा कर्तव्यं प्राप्नोति। तच्चानिष्टम्। न च स नियोक्तुं शक्यते केनचित्। आम्नायस्यापि तत्प्रभवत्वात्। न हि स्वविज्ञानोत्थेन वचसा स्वयं नियुज्यते। नापि बहुवित्स्वाम्यविवेकिना भृत्येन। आम्नायस्यानित्यत्वे सति स्वातन्त्र्यात्सर्वान्प्रति नियोक्तृत्वसामर्थ्यमिति चेत्। न, उक्तदोषात्। तथापि सर्वेण सर्वदा सर्वमविशिष्टं कर्म कर्तव्यमित्युक्तो दोषोऽप्यपरिहार्य एव। तदपि शास्त्रेणैव विधीयते इति चेत्। यथा कर्मकर्तव्यता शास्त्रेण कृता तथा तदप्यात्मज्ञानं तस्यैव कर्मिणः शास्त्रेण विधीयते इति चेत्। न, विरुद्धार्थबोधकत्वानुपपत्तेः। न ह्येकस्मिन्कृताकृतसम्बन्धित्वं तद्विपरीतत्वं च बोधयितुं शक्यम्। शीतोष्णतामिवाग्नेः। न चेष्टयोगचिकीर्षा आत्मनोऽनिष्टवियोगचिकीर्षा च शास्त्रकृता, सर्वप्राणिनां तद्दर्शनात्। शास्त्रकृतं चेत्तदुभयं गोपालादीनां न दृश्येत अशास्त्रज्ञत्वात्तेषाम्। यद्धि स्वतोऽप्राप्तं, तच्छास्त्रेण बोधयितव्यम्। तच्चेत्कृतकर्तव्यताविरोध्यात्मज्ञानं शास्त्रेण कृतं, कथं तद्विरुद्धां कर्तव्यतां पुनरुत्पादयेच्छीततामिवाग्नौ तम इव च भानौ। न बोधयत्येवेति चेत्। न, 'स म आत्मेति विद्यात्प्रज्ञानं ब्रह्म' इति चोपसंहारात्। 'तदात्मानमेवावेत्' 'तत्त्वमसि' इत्येवमादिवाक्यानां तत्परत्वात्। उत्पन्नस्य च ब्रह्मात्मविज्ञानस्याबाध्यमानत्वान्नानुत्पन्नं भ्रान्तं वेति शक्यं वक्तुम्।

त्यागेऽपि प्रयोजनाभावस्य तुल्यत्वमिति चेत् "नाकृतेनेह कश्चनो"

इति स्मृतेः, य आहुर्विदित्वा ब्रह्म व्युत्थानमेव कुर्यादिति, तेषामप्येष समानदोषः प्रयोजनाभाव इति चेत्। न, अक्रियामात्रत्वात् व्युत्थानस्य। अविद्यानिमित्तो हि प्रयोजनस्य भावो न वस्तुधर्मः। सर्वप्राणिनां (१) तद्दर्शनात्, प्रयोजनतृष्णया च प्रेर्यमाणस्य वाङ्मनःकायैः प्रवृत्तिदर्शनात्, 'सोऽकामयत जाया मे स्यात्' इत्यादिना पुत्रवित्तादि पाङ्क्तलक्षणं काम्यमेवेति "उभे ह्येते साध्यसाधनलक्षणे एषणे एव" इति वाजसनेयिब्राह्मणेऽवधारणात्। अविद्याकामदोषनिमित्ताया वाङ्मनःकायप्रवृत्तेः पाङ्क्तलक्षणाया विदुषोऽविद्यादिदोषाभावादनुपपत्तेः क्रियाभावमात्रं व्युत्थानं, न तु यागादिवदनुष्ठेयरूपं भावात्मकम्। तच्च विद्यावत्पुरुषधर्म इति न प्रयोजनमन्वेष्टव्यम्। न हि तमसि प्रविष्टस्योदित आलोके यद्गर्तपङ्ककण्टकाद्यपतनं तत्किम्प्रयोजनमिति प्रश्नार्हम्। व्युत्थानं तर्ह्यर्थप्राप्तत्वान्न चोदनार्हमिति। गार्हस्थ्ये चेत्परं ब्रह्म विज्ञानं जातं तत्रैवास्त्वकुर्वत आसनं न ततोऽन्यत्र गमनमिति चेत्। न। कामप्रयुक्तत्वाद्गार्हस्थ्यस्य। 'एतावान्वै कामः' इति 'उभे ह्येते एषणे एव' इत्यवधारणात्। कामनिमित्तपुत्रवित्तादिसम्बन्धनियमाभावमात्रं, न हि ततोऽन्यत्र गमनं व्युत्थानमुच्यते। अतो न गार्हस्थ्य एवाकुर्वत आसनमुपपद्यते। एतेन गुरुशुश्रूषातपसोरप्यप्रतिपत्तिर्विदुषः सिद्धा।

अत्र केचित् गृहस्था भिक्षाटनादिभयात्परिभवाच्च त्रस्यमानाः सूक्ष्मदृष्टितां दर्शयन्त उत्तरमाहुः। भिक्षोरपि भिक्षाटनादिनियमदर्शनाद्देहधारणमात्रार्थिनो गृहस्थस्यापि साध्यसाधनैषणोभयविनिर्मुक्तस्य देहमात्रधारणार्थमशनाच्छादनमात्रमुपजीवतो गृह एवास्त्वासनमिति। न, स्वगृहविशेषपरिग्रहनियमस्य कामप्रयुक्तत्वादित्युक्तोत्तरमेतत्। स्वगृहविशेषपरिग्रहाभावे च शरीरधारणमात्रप्रयुक्ताशनाच्छादनार्थिनः स्वपरिग्रहविशेषाभावेऽर्थाद्भिक्षुकत्वमेव। शरीरधारणार्थायां भिक्षाटनादिप्रवृत्तौ यथा नियमो भिक्षोः शौचादौ च, तथा गृहिणोऽपि विदुषोऽकामिनोऽस्तु नित्यकर्मसु नियमेन प्रवृत्तिर्यावज्जीवादिश्रुतिनियुक्तत्वात् प्रत्यवायपरिहारायेति। एतन्नियोगाविषयत्वेन विदुषः प्रत्युक्तमशक्यनियोज्यत्वाच्चेति। यावज्जीवादिनित्यचोदनानर्थक्यमिति चेत्। न, अविद्वद्विषयत्वेनार्थ-

(१) तददर्शनात् इति पाठः।

त्वात् । यत्तु भिक्षोः शरीरधारणमात्रप्रवृत्तस्य प्रवृत्तेर्नियतत्वं तत्प्रवृत्तेर्न प्रयोजकम् । आचमनप्रवृत्तस्य पिपासापगमवन्नान्यप्रयोजनार्थत्वमवगम्यते । न चाग्निहोत्रादीनां तद्वदर्थप्राप्तप्रवृत्तिनियतत्वोपपत्तिः । अर्थप्राप्तप्रवृत्तिनियमोऽपि प्रयोजनाभावेऽनुपपन्न एवेति चेत् । न, तन्नियमस्य पूर्वप्रवृत्तिसिद्धत्वात्तदतिक्रमे यत्नगौरवादर्थप्राप्तस्य व्युत्थानस्य पुनर्वचनाद्विदुषः कर्तव्यत्वोपपत्तिः । अविदुषापि मुमुक्षुणा पारिव्राज्यं कर्तव्यमेव । तथा च 'शान्तो दान्तः' इत्यादिवचनं प्रमाणम् । शमदमादीनां चात्मदर्शनसाधनानामन्याश्रमेष्वनुपपत्तेः । 'अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम्' इति च श्वेताश्वतरे विज्ञायते । 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति च कैवल्यश्रुतिः । "ज्ञात्वा नैष्कर्म्यमाचरेत्" इति च स्मृतेः । "ब्रह्माश्रमपदे वसेत्" इति च ब्रह्मचर्यादिविद्यासाधनानां च साकल्येनात्याश्रमिषूपपत्तेर्गार्हस्थ्येऽसम्भवात् । न चासम्पन्नं साधनं कस्यचिदर्थस्य साधनायालम् । यद्विज्ञानोपयोगीनि च गार्हस्थ्याश्रमकर्माणि तेषां परमफलमुपसंहृतं देवताप्ययलक्षणं संसारविषयमेव ।

यदि कर्मिण एव परमात्मविज्ञानमभविष्यत् संसारविषयस्यैव फलस्योपसंहारो नोपापत्स्यत । अङ्गफलं तदिति चेन्न । तद्विरोध्यात्मवस्तुविषयत्वादात्मविद्यायाः । निराकृतसर्वनामरूपकर्मपरमार्थात्मवस्तुविषयं आत्मज्ञानममृतत्वसाधनम् । गुणफलसम्बन्धे हि निराकृतसर्वविशेषात्मवस्तुविषयत्वं ज्ञानस्य न प्राप्नोति; तच्चानिष्टं, 'यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यधिकृत्य क्रियाकारकफलादिसर्वव्यवहारनिराकरणाद्विदुषः । तद्विपरीतस्याविदुषो 'यत्र हि द्वैतमिव' इत्युक्त्वा क्रियाकारकफलरूपस्यैव संसारस्य दर्शितत्वाच्च वाजसनेयिब्राह्मणे । तथेहापि देवताप्ययं संसारविषयं यत्फलमशनायादिमद्वस्त्वात्मकं तत्फलमुपसंहृत्य केवलं सर्वात्मकवस्तुविषयं ज्ञानममृतत्वाय वक्ष्यामीति प्रवर्त्तते ।

ऋणप्रतिबन्धश्चाविदुष एव मनुष्यपितृदेवलोकप्राप्तिं प्रति, न विदुषः । 'सोऽयं मनुष्यलोकः पुत्रेणैव' इत्यादिलोकत्रयसाधननियमश्रुतेः विदुषश्च ऋणप्रतिबन्धाभावो दर्शित आत्मलोकार्थिनः 'किं प्रजया करिष्यामः' इत्यादिना । तथा 'एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः' इत्यादि । 'एतद्ध स्म

वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रुः' इति च कौषीतकिनाम् । अविदुष-स्तर्हि ऋणानपाकरणे पारिव्राज्यानुपपत्तिरिति चेत् । न । प्राग्गार्हस्थ्यप्रति-पत्तेर्ऋणित्वासम्भवादधिकारानारूढोऽप्यृणी चेत्स्यात् सर्वस्य ऋणित्वमित्यनिष्टं प्रसज्येत । प्रतिपन्नगार्हस्थ्यस्यापि 'गृहाद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्या-देव प्रव्रजेद्गृहाद्वा वनाद्वा' इत्यात्मदर्शनोपायसाधनत्वेनेष्यत एव पारिव्राज्यम् । यावज्जीवादिश्रुतीनां अविद्वदमुमुक्षुविषये कृतार्थता । छान्दोग्ये च केषाञ्चिद् द्वादशरात्रमग्निहोत्रं हुत्वा तत ऊर्ध्वं परित्यागः श्रूयते ।

यत्त्वनधिकृतानां पारिव्राज्यमिति, तन्न । तेषां पृथगेव 'उत्सन्नाग्निरनग्निको वा' इत्यादिश्रवणात् (१) सर्वस्मृतिषु चाविशेषेणाश्रमविकल्पः प्रसिद्धः समुच्चयश्च । यत्तु विदुषोऽर्थप्राप्तं व्युत्थानमित्यशास्त्रार्थत्वे, गृहे वने वा तिष्ठतो न विशेष इति, तदसत् । व्युत्थानस्यैवार्थप्राप्तत्वान्नान्यत्रावस्थानं स्यात् । अन्यत्रावस्थानस्य कामकर्मप्रयुक्तत्वं ह्यवोचाम, तदभावमात्रं व्युत्थान-मिति च । यथाकामित्वं तु विदुषोऽत्यन्तमप्राप्तं अत्यन्तमूढविषयत्वेनावगमात् । तथा शास्त्रचोदितमपि कर्म आत्मविदोऽप्राप्तं गुरुभारतयावगम्यते, किमुतात्यन्ता-विवेकनिमित्तं यथाकामित्वम् । नहि उन्मादतिमिरदृष्ट्युपलब्धं वस्तु तदपगमे-ऽपि तथैव स्यात् उन्मादतिमिरदृष्टिनिमित्तत्वादेव तस्य । तस्मात् आत्मविदो व्युत्थानव्यतिरेकेण न यथाकामित्वं न चान्यत्कर्तव्यमित्येतत्सिद्धम् ।

यत्तु—'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' इति च विद्यावतो विद्यया सहाविद्यापि वर्तत इत्ययमर्थः । कस्तर्हि ? एकस्मिन्पुरुषे एते एकदैव न सह सम्बध्येयातामित्यर्थः । यथा शुक्तिकायां रजतशुक्तिकाज्ञाने एकस्य पुरुषस्य। 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता' इति हि काठके । तस्मान्न विद्यायां सत्यामविद्यासम्भवोऽस्ति । "तपसा ब्रह्म विजिज्ञासस्व" इत्यादिश्रुतेः, तपआदिर्विद्योत्पत्तिसाधनं गुरूपासनादि च कर्म अविद्यात्मकत्वा-

(१) सर्वस्मृतिषु चेति—अतएव ब्रह्मचर्यवान् प्रव्रजति। बुद्ध्वा कर्माणि यमिच्छेत्तमी मावसेत् । ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथभिक्षुकः ॥ य इच्छेत परमं स्थानमुत्तमां वृत्तिमाश्रयेदित्यादिषु स्मृतिषु विकल्पः प्रसिद्धः ॥ अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्मतः ॥ इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेदित्यादिषु समुच्चयश्च सिद्ध इत्यर्थः ।

दविद्योच्यते तेन विद्यामुत्पाद्य मृत्युं काममतितरति । ततो निष्कामस्त्यक्तैषणो ब्रह्मविद्यया अमृतत्वमश्नुते इत्येतमर्थं दर्शयन्नाह–'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति । यत्तु पुरुषायुः सर्वं कर्मणैव व्याप्तं 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति तदविद्वद्विषयत्वेन परिहृतमितरथाऽसम्भवात्। यत्तु वक्ष्यमाणमपि पूर्वोक्ततुल्यत्वात्कर्मणाऽविरुद्धमात्मज्ञानमिति, तत्सविशेषनिर्विशेषात्मतया प्रत्युक्तं, उत्तरत्र व्याख्याने च दर्शयिष्यामः। अतः केवलनिष्क्रियब्रह्मात्मैकत्वविद्याप्रदर्शनार्थमुत्तरो ग्रन्थ आरभ्यते ।

---

(१)वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु।वक्तारमवतु वक्तारम्। ॐ शान्तिः शान्तिः शान्तिः ॥

**ॐ आत्मा वा इदमेक एवाग्र आसीत्।**
**नान्यत्किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति ॥ १ ॥**

---

(१) वाङ्मे मनसीति। मे—मम। वाक्—उपनिषद्ग्रन्थपाठे प्रवृत्तं वागिन्द्रियं। मनसि प्रतिष्ठिता—मनसा यद्यच्छब्दजातं विवक्षितं तदेव पठतु। मे मनः वाचि प्रतिष्ठितं यद्वक्तव्यं शब्दजातमस्ति तदेव मनसा विवक्ष्यते। एवमन्योन्यानुगृहीते वाङ्मनसी। विद्यार्थं ग्रन्थं साकल्येनावधारयितुं शक्नुतः। आविः—स्वयं प्रकाशं ब्रह्म। हे ब्रह्म मे मदर्थं आविः एधि—अज्ञानापनयनेन प्रकटी भव। हे वाङ्मनसी, मे—मदर्थं। वेदस्य—उपनिषदः। आणीस्थः—आनयनसमर्थे भवताम्। मे—मया श्रुतं—अधीनग्रन्थं अर्थजातं च, मा प्रहासीः—मा परित्यजतु विस्मृतं मा भूदिति यावत्। अनेन—अधीतेन ग्रन्थेन विस्मरणरहितेन ॥ अहोरात्रान् सन्दधामि–संयोजयामि। आलस्यं परित्यज्य अधीतं ग्रन्थं निरन्तरं पठामीत्यर्थः। ऋतं—मानसिकसत्यं सत्यं—वाचिकसत्यं। तत् मया वक्ष्यमाणं ब्रह्मतत्वं मां शिष्यं अवतु–सम्यग्बोधेन पालयतु। वक्तारं—आचार्यं। अवतु—बोधकत्वसामर्थ्यप्रदानेन पालयतु इत्यलम्।

आत्मेति । (१) आत्मा आप्नोतेरत्तेरततेर्वा परः सर्वज्ञः सर्वशक्तिरशनायादिसर्वसंसारधर्मवर्जितो नित्यशुद्धबुद्धमुक्तस्वभावोऽजोऽजरोऽमरोऽमृतोऽभयोऽद्वयो वै । इदं यदुक्तं नामरूपकर्मभेदभिन्नं जगदात्मैवैकोऽग्रे जगतः सृष्टेः प्रागासीत् । किमिदानीं स एवैकः । न । कथं तर्ह्यासीदित्युच्यते ? यद्यपीदानीं स एवैकस्तथाप्यस्ति विशेषः । प्रागुत्पत्तेः अव्याकृतनामरूपभेदमात्मभूतमात्मैकशब्दप्रत्ययगोचरं, जगदिदानीं व्याकृतनामरूपभेदत्वादनेकशब्दप्रत्ययगोचरमात्मैकशब्दप्रत्ययगोचरं चेति विशेषः । यथा सलिलात्पृथक्फेननामरूपव्याकरणात्प्राक्सलिलैकशब्दप्रत्ययगोचरमेव फेनं, यदा सलिलात्पृथङ्नामरूपभेदेन व्याकृतं भवति तदा सलिलं फेनं चेत्यनेकशब्दप्रत्ययभाक्सलिलमेवेति चैकशब्दप्रत्ययभाक्च फेनं भवति तद्वत् । नान्यत्किञ्चन न किञ्चिदपि मिषन्निमिषद्व्यापारवदितरद्वा । यथा साङ्ख्यानामनात्मपक्षपाति स्वतन्त्रं प्रधानं, यथा च काणादानामणवो, न तद्वदिहान्यदात्मनः किञ्चिदपि वस्तु विद्यते । किं तर्हि आत्मैवैक आसीदित्यभिप्रायः । स सर्वज्ञस्वाभाव्यात् आत्मा एक एव सन्नीक्षत लोकान्नु सृजा इति । ननु प्रागुत्पत्तेरकार्यकरणत्वात्कथमीक्षितवान् । नायं दोषः, सर्वज्ञस्वाभाव्यात् । तथा च मन्त्रवर्णः—"अपाणिपादो जवनो ग्रहीता" इत्यादिः । केनाभिप्रायेणेत्याह—लोकानम्भःप्रभृतीन्प्राणिकर्मफलोपभोगस्थानभूतान्नु सृजे सृजेऽहमिति ॥ १ ॥

**स इमाँल्लोकानसृजत । अम्भो मरीचीर्मरमापोऽम्भः परेण दिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः । पृथिवी मरो या अधस्तात्ता आपः ॥ २ ॥**

एवमीक्षित्वा आलोच्य स आत्मेमाँल्लोकानसृजत सृष्टवान् । यथेह बुद्धिमांस्तक्षादिरेवंप्रकारान्प्रासादादीन्सृजे इतीक्षित्वेक्षानन्तरं प्रासादादीन्सृजति तद्वत् । ननु सोपादानस्तक्षादिः प्रासादादीन्सृजतीति युक्तं निरुपादानस्त्वात्मा कथं लोकान्सृजतीति । नैष दोषः । सलिलफेनस्थानीये आत्मभूते नामरूपे अव्या-

(१) आत्मेति — यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ॥ यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते ॥ इति ॥

कृते आत्मैकशब्दवाच्ये व्याकृतफेनस्थानीयस्य जगतः उपादानभूते सम्भवतः । तस्मात् आत्मभूतनामरूपोपादानभूतः सन्सर्वज्ञो जगन्निर्मिमीते इत्यविरुद्धम् । अथवा यथा विज्ञानवान्मायावी निरुपादान आत्मानमेव आत्मान्तरत्वेनाकाशेन गच्छन्तमिव निर्मिमीते, तथा सर्वज्ञो देवः सर्वशक्तिर्महामाय आत्मानमेवात्मान्तरत्वेन जगद्रूपेण निर्मिमीते इति युक्ततरम् । एवं च सति कार्यकारणोभयासद्वायादिपक्षाश्च न प्रसजन्ते सुनिराकृताश्च भवन्ति । कान्लोकानसृजतेत्याह अम्भो मरीचीर्मरमाप इति । आकाशादिक्रमेण अण्डमुत्पाद्याम्भःप्रभृतींल्लोकानसृजत। तत्राम्भः प्रभृतीन्स्वयमेव व्याचष्टे श्रुतिः। अदस्तदम्भः शब्दवाच्यो लोकः, परेण दिवं द्युलोकात्परेण परस्तात्सोऽम्भःशब्दवाच्यः, अम्भोभरणात् । द्यौः प्रतिष्ठाश्रयस्तस्याम्भसो लोकस्य । द्युलोकादधस्तादन्तरिक्षं यत्तन्मरीचयः । एकोऽप्यनेकस्थानभेदत्वाद्बहुवचनभाङ्मरीचय इति । मरीचिभिर्वा रश्मिभिः सम्बन्धात् । पृथिवी मरो, म्रियन्तेऽस्मिन् भूतानीति। या अधस्तात् पृथिव्यास्ता आप उच्यन्ते आप्नोतेः, लोकाः । यद्यपि पञ्चभूतात्मकत्वं लोकानां तथाप्यब्बाहुल्यादब्नामभिरेवाम्भो मरीचीर्मरमाप इत्युच्यन्ते ॥ २ ॥

**स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति ।**
**सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत् ॥ ३ ॥**

सर्वप्राणिकर्मफलोपादानाधिष्ठानभूतांश्चतुरो लोकान्सृष्ट्वा स ईश्वरः पुनरेवेक्षत । इमे नु त्वम्भःप्रभृतयो मया सृष्टा लोकाः परिपालयितृवर्जिता विनश्येयुः। तस्मादेषां रक्षणार्थं लोकपालाँल्लोकानां पालयितॄन्नु सृजे सृजेऽहमिति । एवमीक्षित्वा सोऽद्भ्य एवाप्प्रधानेभ्य एव पञ्चभूतेभ्यो, येभ्योऽम्भःप्रभृतीन्सृष्टवाँस्तेभ्य एवेत्यर्थः । पुरुषं पुरुषाकारं शिरःपाण्यादिमन्तं समुद्धृत्य अद्भ्यः समुपादाय मृत्पिण्डमिव कुलालः पृथिव्या, अमूर्छयन्मूर्छितवान्सम्पिण्डितवान्स्वावयवसंयोजनेनेत्यर्थः ॥ ३ ॥

**तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डम् । मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षिभ्यां चक्षुश्चक्षुष आदित्यः**

**कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः ॥ ४ ॥**

**इत्यैतरेयोपनिषदि प्रथमः खण्डः ॥ १ ॥**

तं पिण्डं पुरुषविधमुद्दिश्याभ्यतपत् तदभिध्यानं सङ्कल्पं कृतवानित्यर्थः । 'यस्य ज्ञानमयं तपः' इत्यादिश्रुतेः तस्याभितप्तस्येश्वरसङ्कल्पेन तपसाभितप्तस्य पिण्डस्य मुखं निरभिद्यत मुखाकारं सुषिरमजायत । यथा पक्षिणोऽण्डं निर्भिद्यते एवम् । तस्मान्निर्भिन्नान्मुखाद्वाक्करणमिन्द्रियं निरवर्तत तदधिष्ठाताग्निस्ततो वाचो लोकपालः । तथा नासिके निरभिद्येताम् । नासिकाभ्यां प्राणः प्राणाद्वायुः इति सर्वत्राधिष्ठानं करणं देवता च त्रयं क्रमेण निर्भिन्नमिति । अक्षिणी कर्णौ त्वक् हृदयमन्तःकरणाधिष्ठानं मनोऽन्तःकरणं, नाभिः सर्वप्राणबन्धनस्थानम् । अपानसंयुक्तत्वादपान इति पाय्विन्द्रियमुच्यते । तस्मात् तस्याधिष्ठात्री देवता मृत्युः यथाऽन्यत्र । तथा शिश्नं निरभिद्यत प्रजननेन्द्रियस्थानमिन्द्रियं रेतो रेतोविसर्गार्थत्वात्सह रेतसोच्यते रेतस आप इति ॥ ४ ॥ इत्यैतरेयोपनिषद्भाष्ये प्रथमःखण्डः ॥ १ ॥

**ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतंस्तमशनापिपासाभ्यामन्ववार्जत् । ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामेति ॥ १ ॥**

ता एता अग्न्यादयो देवता लोकपालत्वेन सङ्कल्प्य सृष्टा ईश्वरेणास्मिन्संसारार्णवे संसारसमुद्रे महत्यविद्याकामकर्मप्रभवदुःखोदके तीव्ररोगजरामृत्युमहाग्राहेऽनादावनन्तेऽपारे निरालम्बे विषयेन्द्रियजनितसुखलवलक्षणविश्रामे पञ्चेन्द्रियार्थतृष्णामारुतविक्षोभोत्थितानर्थशतमहोर्मौ महारौरवाद्यनेकनिरयगतहाहेत्यादिकूजिताक्रोशनोद्भूतमहारवे सत्यार्जवदानदयाहिंसाशमदमधृत्याद्यात्मगुणपाथेयपूर्णज्ञानोडुपे सत्सङ्गसर्वत्यागमार्गे मोक्षतीरे एतस्मिन्महत्यर्णवे प्रापतन्पतितवत्यः । तस्मात् अग्न्यादिदेवताप्ययलक्षणापि या गतिर्व्याख्याता ज्ञानकर्म-

समुच्चयानुष्ठानफलभूता सापि नालं संसारदुःखोपशमाय इत्ययं विवक्षितोऽर्थोऽत्र । यत एवं तस्मादेवं विदित्वा परं ब्रह्म आत्मात्मनः सर्वभूतानां च यो वक्ष्यमाणविशेषणः प्रकृतश्च जगदुत्पत्तिस्थितिसंहारहेतुत्वेन, स सर्वसंसारदुःखोपशमनाय वेदितव्यः । तस्मात् "एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यं" यदेतत्परब्रह्मात्मज्ञानं "नान्यः पन्था विद्यतेऽयनाय" इति मन्त्रवर्णात् । तं स्थानकरणदेवतोत्पत्तिबीजभूतं पुरुषं प्रथमोत्पादितं पिण्डमात्मानमशनापिपासाभ्यामन्ववार्जदनुगमितवान्संयोजितवानित्यर्थः । तस्य कारणभूतस्याशनादिदोषवत्त्वात्तत्कार्यभूतानामपि देवतानामशनादिमत्त्वम् । तास्ततोऽशनापिपासाभ्यां पीड्यमाना एनं पितामहं स्रष्टारमब्रुवन्नुक्तवत्यः । आयतनमधिष्ठानं नोऽस्मभ्यं प्रजानीहि विधत्स्व, यस्मिन्नायतने प्रतिष्ठिताः समर्थाः सत्योऽन्नमदाम भक्षयाम इति ॥ १ ॥

**ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति ।**
**ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ॥ २ ॥**

एवमुक्त ईश्वरस्ताभ्यो देवताभ्यो गां गवाकृतिविशिष्टं पिण्डं ताभ्य एवाद्भ्यः पूर्ववत्पिण्डं समुद्धृत्य मूर्छयित्वानयद्दर्शितवान् । ताः पुनर्गवाकृतिं दृष्ट्वाऽब्रुवन् । न वै नोऽस्मदर्थमधिष्ठानायान्नमत्तुमयं पिण्डोऽलं न वै । अलं पर्याप्तोऽत्तुं न योग्य इत्यर्थः । गवि प्रत्याख्याते ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति पूर्ववत् ॥ २ ॥

**ताभ्यः पुरुषमानयत्ता अब्रुवन्सुकृतं बतेति पुरुषो वाव सुकृतम् । ता अब्रवीद्यथायतनं प्रविशतेति ॥ ३ ॥**

सर्वप्रत्याख्याने ताभ्यः पुरुषमानयत्स्वयोनिभूतम् । ताः स्वयोनिं पुरुषं दृष्ट्वा अखिन्नाः सत्यः सुकृतं शोभनं कृतमिदमधिष्ठानं बतेत्यब्रुवन् । तस्मात्पुरुषो वाव पुरुष एव सुकृतं सर्वपुण्यकर्महेतुत्वात् । स्वयं वा स्वेनैवात्मनास्वमायाभिः कृतत्वात्सुकृतमित्युच्यते । ता देवता ईश्वरोऽब्रवीदिष्टमासामिदमधिष्ठानमिति मत्वा, सर्वे हि स्वयोनिषु रमन्ते, अतो यथायतनं यस्य यद्वदनादिक्रियायोग्यमायतनं तत्प्रविशतेति ॥ ३ ॥

**अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन् ॥ ४ ॥**

तथास्त्वित्यनुज्ञां प्रतिलभ्येश्वरस्य नगर्यामिव बलाधिकृतादयः अग्निर्वागभिमानी वागेव भूत्वा स्वां योनिं मुखं प्राविशत्तथोक्तार्थमन्यत्। वायुर्नासिके आदित्योऽक्षिणी दिशः कर्णौ ओषधिवनस्पतयस्त्वचं चन्द्रमा हृदयं मृत्युर्नाभिमापः शिश्नं प्राविशन् ॥ ४ ॥

**तमशनापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति। ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति। तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः ॥५॥ इत्यैतरेयोपनिषदि द्वितीयः खण्डः ॥२॥**

एवं लब्धाधिष्ठानासु देवतासु निरधिष्ठाने सत्यौ अशनापिपासे तमीश्वरमब्रूतामावाभ्यामधिष्ठानमभिप्रजानीहि चिन्तय विधत्स्वेत्यर्थः। स ईश्वर एवमुक्तस्ते अशनापिपासे अब्रवीत्। न हि युवयोर्भावरूपत्वाच्चेतनावद्वस्त्वनाश्रित्यात्मलाभः सम्भवति। तस्मादेतास्वेवाग्न्याद्यासु वां युवां देवतास्वध्यात्माधिदेवतास्वाभजामि वृत्तिसंविभागेनानुगृह्णामि। एतासु भागिन्यौ यद्देवत्यो यो भागो हविरादिलक्षणः स्यात्तस्यास्तेनैव भागेन भागिन्यौ भागवत्यौ वां करोमीति। सृष्ट्यादौ ईश्वर एवं व्यदधाद्यस्मात्तस्मादिदानीमपि यस्यै कस्यै च देवतायै देवताया अर्थाय हविर्गृह्यते चरुपुरोडाशादिलक्षणं भागिन्यावेव भागवत्यावेवास्यां देवतायामशनापिपासे भवतः ॥ ५ ॥ इत्यैतरेयोपनिषद्भाष्ये द्वितीयः खण्डः ॥ २ ॥

**स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति ॥१॥**

स एवमीश्वर ईक्षत। कथं इमे नु लोकाश्च लोकपालाश्च मया सृष्टा अशनायापिपासाभ्यां च संयोजिताः। अतो नैषां स्थितिरन्नमन्तरेण तस्मादन्नमेभ्यो

लोकपालेभ्यः सृजै सृजे इति। एवं हि लोके ईश्वराणामनुग्रहे निग्रहे च स्वातन्त्र्यं दृष्टं स्वेषु । तद्वन्महेश्वरस्यापि सर्वेश्वरत्वात्सर्वान्प्रति निग्रहेऽनुग्रहे च स्वातन्त्र्यमेव ॥ १ ॥

**सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मूर्तिरजायत ।**
**या वै सा मूर्तिरजायतान्नं वै तत् ॥ २ ॥**

स ईश्वरोऽन्नं सिसृक्षुस्ता एव पूर्वोक्ता अप उद्दिश्याभ्यतपत् । ताभ्योऽभितप्ताभ्य उपादानभूताभ्यामूर्तिर्घनरूपं धारणसमर्थं चराचरलक्षणमजायतोत्पन्नम् अन्नं वै तन्मूर्तिरूपं या वै सा मूर्तिरजायत ॥ २ ॥

**तदेनत्सृष्टं पराङत्यजिघांसत्तद्वाचाऽजिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुम् । स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत ॥३॥ तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेन ग्रहीतुं स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् ॥ ४ ॥ तच्चक्षुषाजिघृक्षत्तन्नाशक्नोच्चक्षुषा ग्रहीतुं स यद्धैनच्चक्षुषाग्रहैष्यत् दृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ५ ॥ तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुं स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् ॥ ६ ॥ तत्त्वचाजिघृक्षत्तन्नाशक्नोत्त्वचा ग्रहीतुं स यद्धैनत्त्वचाग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ७ ॥ तन्मनसाजिघृक्षत्तन्नाशक्नोन्मनसा ग्रहीतुं स यद्धैनन्मनसाग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत् ॥८॥ तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रहीतुं स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् ॥९॥ तदपानेनाजिघृक्षत्तदावयत् सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः ॥ १० ॥**

तदेनदन्नं लोकलोकपालानामर्थेऽभिमुखे सृष्टं सत् यथा मूषकादिर्मार्जारादिगोचरे सन्मम मृत्युरन्नाद इति मत्वा परागञ्चतीति पराङ् पराक् सत् अत्तॄनतीत्याजिघांसदतिगन्तुमैच्छत् पलायितुं प्रारभतेत्यर्थः । तदन्नाभिप्रायं मत्वा स लोकलोकपालसङ्घातः कार्यकरणलक्षणः पिण्डः प्रथमजत्वात् अन्यांश्चान्ना-

दानपरस्यंस्तदन्नं वाचा वदनव्यापारेणाजिघृक्षद्ग्रहीतुमैच्छत्। तदन्नं नाशक्नोन्न समर्थोऽभवद्वाचा वदनक्रियया ग्रहीतुमुपादातुम्। स प्रथमजः शरीरी यद्यदि हैनद्वाचाऽग्रहैष्यद्गृहीतवान्स्यादन्नं सर्वोऽपि लोकस्तत्कार्यभूतत्वादभिव्याहृत्य हैवान्नमत्रप्स्यत्तृप्तोऽभविष्यत्। न चैतदस्ति अतो नाशक्नोद्वाचा ग्रहीतुमित्यवगच्छामः पूर्वजोऽपि। समानमुत्तरम्। तत्प्राणेन तच्चक्षुषा तच्छ्रोत्रेण तत्त्वचा तन्मनसा तच्छिश्नेन तेन तेन करणव्यापारेणान्नं ग्रहीतुमशक्नुवन्पश्चादपानेन वायुना मुखच्छिद्रेण तदन्नमजिघृक्षत् तदावयत्तदन्नमेवं जग्राहाशितवान्। तेन स एषोऽपानवायुरन्नस्य ग्रहोऽन्नग्राहक इत्येतत्। यद्वायुर्यो वायुरन्नायुरन्नबन्धनोऽन्नजीवनो वै प्रसिद्धः स एष यो वायुः ॥ ३—१० ॥

**स ईक्षत कथं न्विदं मदृते स्यादिति स ईक्षत कतरेण प्रपद्या इति। स ईक्षत यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति ॥ ११ ॥**

स एवं लोकलोकपालसङ्घातस्थितिमन्ननिमित्तां कृत्वा पुरपौरतत्पालयितृस्थितिसमां स्वामीव ईक्षत। कथं नु केन प्रकारेणेति वितर्कयन्निदं मदृते मामन्तरेण पुरस्वामिनम्। यदिदं कार्यकरणसङ्घातकार्यं वक्ष्यमाणं कथं नु खलु मामन्तरेण स्यात्परार्थं सत्। यदि वाचाभिव्याहृतमित्यादि केवलमेव वाग्व्यवहरणादि, तन्निरर्थकं न कथञ्चन भवेद्बलिस्तुत्यादिवत्। पौरवंशादिभिः प्रयुज्यमानं स्वाम्यर्थं सत्स्वामिनमन्तरेणासत्येव स्वामिनि, तद्वत्। तस्मान्मया परेण स्वामिनाधिष्ठात्रा कृताकृतफलसाक्षिभूतेन भोक्त्रा भवितव्यं पुरस्येव राज्ञा। यदि नामैतत्संहतकार्यस्य परार्थत्वं, परार्थिनं मां चेतनमन्तरेण भवेत्पुरपौरकार्यमिव तत्स्वामिनम्। अथ कोऽहं किंस्वरूपः कस्य वा स्वामी ? यद्यहं कार्यकरणसङ्घातमनुप्रविश्य वागाद्यभिव्याहृतादिफलं नोपलभेय राजेव पुरमाविश्याधिकृतपुरुषकृताकृतादिलक्षणं, न कश्चिन्मामयं सन्नेवंरूपश्चेत्यधिगच्छेद्विचारयेत्। विपर्यये तु योऽयं वागाद्यभिव्याहृतादीदमिति वेद, स सन्वेदनरूपश्चेत्यधि-

गन्तव्योऽहं स्यां, यदर्थमिदं संहतानां वागादीनामभिव्याहृतादि । तथा स्तम्भकुड्यादीनां प्रासादादिसंहतानां स्वावयवैरसंहतपरार्थत्वं तद्वदिति । एवमीक्षित्वातः कतरेण प्रपद्या इति । प्रपदं च मूर्धा चास्य सङ्घातस्य प्रवेशमार्गौ अनयोः कतरेण मार्गेणेदं कार्यकारणसङ्घातलक्षणं पुरं प्रपद्यै प्रपद्येयेति ॥ ११ ॥

**स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनं तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति ॥ १२ ॥**

एवमीक्षित्वा न तावन्मद्भृत्यस्य प्राणस्य मम सर्वार्थाधिकृतस्य प्रवेशमार्गेण प्रपदाभ्यामधः प्रपद्ये । किं तर्हि, पारिशेष्यादस्य मूर्धानं विदार्य प्रपद्ये इति लोक इवेक्षितकारी स स्रष्टेश्वर एतमेव मूर्धसीमानं केशविभागावसानं विदार्य च्छिद्रं कृत्वैतया द्वारा मार्गेणेमं लोकं कार्यकरणसङ्घातं प्रापद्यत प्रविवेश । सेयं हि प्रसिद्धा द्वाः मूर्ध्नि तैलादिधारणकाले अन्तस्तद्रसादिसंवेदनात् । सैषा विदृतिर्विदारितत्वाद्विदृतिर्नाम प्रसिद्धा द्वाः । इतराणि तु श्रोत्रादिद्वाराणि भृत्यादिस्थानीयसाधारणमार्गत्वान्न समृद्धीनि नानन्दहेतूनि । इदं तु द्वारं परमेश्वरस्यैव केवलस्येति । तदेतन्नान्दनं नन्दनमेव, नान्दनमिति दैर्घ्यं छान्दसम् । नन्दत्यनेन द्वारेण गत्वा परस्मिन्ब्रह्मणीति । तस्यैव स्रष्ट्वा प्रविष्टस्य जीवेनात्मना राज्ञ इव पुरं त्रय आवसथाः । जागरितकाले इन्द्रियस्थानं दक्षिणं चक्षुः, स्वप्नकालेऽन्तर्मनः, सुषुप्तिकाले हृदयाकाश इत्येते, (१) वक्ष्यमाणा वा त्रय आवसथाः पितृशरीरं मातृगर्भाशयः स्वं च शरीरमिति । त्रयः स्वप्ना जाग्रत्स्वप्नसुषुप्त्याख्याः । ननु जागरितं प्रबोधरूपत्वान्न स्वप्नः । नैवं स्वप्न एव, कथं, परमार्थस्वात्मप्रबोधाभावात्स्वप्नवदसद्वस्तुदर्शनाच्च । अयमेवावसथश्चक्षुर्दक्षिणं प्रथमः । मनोऽन्तरं द्वितीयः । हृदयाकाशस्तृतीयः । अयमावसथ इत्युक्तानुकीर्तनमेव । तेषु ह्ययमावसथेषु पर्यायेणात्मभावेन वर्तमानोऽविद्यया दीर्घकालं

---

(१) वक्ष्यमाणा वा त्रय आवसथाः इति -- अनेन संसारो द्विविधः । दैनन्दिनव्यवहारो जन्मान्तरस्वीकारश्च । तत्र दैनन्दिनव्यवहारस्य नेत्रादीनि स्थानानि । जन्मान्तरव्यवहारस्य तु पितृशरीरादिस्थानानि इति विवेकः । मूले इतिशब्दः संसाररूपाध्यारोपप्रकरणस्य समाप्त्यर्थः ॥

गाढं प्रसुप्तः स्वाभाविक्या न प्रबुध्यतेऽनेकशतसहस्रानर्थसन्निपातजदुःखमुद्गराभिघातानुभवैरपि ॥ १२ ॥

**स जातो भूतान्यभिव्यैख्यत्किमिहा(१)न्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमितीऽ३ ॥ १३ ॥ तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥ १४ ॥**

**इत्यैतरेयोपनिषदि तृतीयः खण्डः ॥ ३ ॥**

स जातः शरीरं प्रविष्टो जीवात्मना भूतान्यभिव्यैख्यद्व्याकरोत् । स कदाचित्परमकारुणिकेनाचार्येणात्मज्ञानप्रबोधकृच्छब्दिकायां (२) वेदान्तमहाभेर्यां तत्कर्णमूले ताड्यमानायामेतमेव सृष्ट्यादिकर्तृत्वेन प्रकृतं पुरुषं पुरि शयानमात्मानं ब्रह्म बृहत्ततमं तकारेणैकेन लुप्तेन ततमं व्याप्ततमं परिपूर्णमाकाशवत्प्रत्यबुध्यतापश्यत् । कथम् । इदं ब्रह्म ममात्मनः स्वरूपमदर्श दृष्टवानस्मि । अहो इति विचारणार्था प्लुतिः पूर्ववत् ॥ १३ ॥

यस्मादिदमित्येव यत्साक्षादपरोक्षाद्ब्रह्म सर्वान्तरमपश्यन्न परोक्षेण तस्मादिदं पश्यतीतीदन्द्रो नाम परमात्मा । इदन्द्रो ह वै नाम प्रसिद्धो लोक ईश्वरः । तमेवमिदन्द्रं सन्तमिन्द्र इति परोक्षेण परोक्षाभिधानेनाचक्षते ब्रह्मविदः संव्यवहारार्थं पूज्यतमत्वात्प्रत्यक्षनामग्रहणभयात् । तथा हि परोक्षप्रियाः परोक्षनामग्रहणप्रिया इव एव हि यस्माद्देवाः । किमुत सर्वदेवानामपि देवो महेश्वरः । द्विर्वचनं प्रकृताध्यायपरिसमाप्त्यर्थम् ॥ १४ ॥ इत्यैतरेयोपनिषद्भाष्ये तृतीयः खण्डः ॥ ३ ॥

---

(१) किमिहान्यं वावदिषदिति—इह अस्मिन् शरीरे अन्यं व्यतिरिक्तमात्मानं वावदिपतिकामीति कथका नोक्तवानित्यर्थः । न ज्ञानवानित्यपि द्रष्टव्यम् । इति शब्दो यस्मादित्यर्थे यस्मादेवं तस्मादभिव्यख्यदित्यध्यारोपप्रकरणसमाप्त्यर्थो वा । इदं वाक्यं भाष्यकारैः स्पष्टत्वादुपेक्षितं लेखकदोषात् पतितं वा ।

(२) वेदान्तमहाभेर्यामिति—उपनिषत्काण्डस्य समुदायस्य भेरीस्थानत्वं तद्गतानां तत्त्वमस्यादिवाक्यानां प्रबोधजनकशब्दत्वमिति ज्ञेयम् ।

## अथ द्वितीयोऽध्यायः ।

अस्मिंश्चतुर्थेऽध्याय एष वाक्यार्थो जगदुत्पत्तिस्थितिप्रलयकृदससारी सर्वज्ञः सर्वशक्तिः सर्ववित्सर्वमिदं जगत्स्वतोऽन्यद्वस्त्वन्तरमनुपादायैव आकाशादिक्रमेण सृष्ट्वा स्वात्मप्रबोधनार्थं सर्वाणि च प्राणादिमच्छरीराणि स्वयं प्रविवेश प्रविश्य च स्वमात्मानं यथाभूतमिदं ब्रह्मास्मीति साक्षात्प्रत्यबुध्यत । तस्मात्स एव सर्वशरीरेष्वेक एवात्मा नान्य इति । अन्योऽपि 'स म आत्मा ब्रह्मास्मीत्येवं विद्यात्' इति 'आत्मा वा इदमेक एवाग्र आसीत्' इति 'ब्रह्म ततमं' इति चोक्तम् । अन्यत्र च सर्वगतस्य सर्वात्मनो बालाग्रमात्रमप्यप्रविष्टं नास्तीति कथं सीमानं विदार्य प्रापद्यत पिपीलिकेव सुषिरम् । नन्वत्यल्पमिदं चोद्यं, बहु चात्र चोदयितव्यम् । अकरणः सन्नीक्षत । अनुपादाय किञ्चिल्लोकानसृजत । अद्भ्यः पुरुषं समुद्धृत्यामूर्छयत् । तस्याभिध्यानान्मुखादि निर्भिन्नं मुखादिभ्यश्चाग्न्यादयो लोकपालास्तेषां चाशनायापिपासादिसंयोजनं तदायतनप्रार्थनं तदर्थं गवादिप्रदर्शनं तेषां च यथायतनप्रवेशनं सृष्टस्यान्नस्य पलायनं वागादिभिर्जिघृक्षा इत्येतत्सर्वं सीमाविदारणप्रवेशसममेव । अस्तु तर्हि सर्वमेवेदमनुपपन्नम् । न । अत्रात्मावबोधमात्रस्य विवक्षितत्वात्सर्वोऽयमर्थवाद इत्यदोषः । मायाविवद्वा, महामायावी देवः सर्वज्ञः सर्वशक्तिः सर्वमेतच्चकार सुखावबोधनप्रतिपत्त्यर्थं लोकवदाख्यायिकादिप्रपञ्च इति युक्ततरः पक्षः । न हि सृष्ट्याख्यायिकादिपरिज्ञानात्किञ्चित्फलमिष्यते । ऐकात्म्यस्वरूपपरिज्ञानात्तु अमृतत्वं फलं सर्वोपनिषत्प्रसिद्धम् । स्मृतिषु च गीतायासु "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्" इत्यादिना । ननु त्रय आत्मानो भोक्ता कर्ता संसारी जीव एकः सर्वलोकशास्त्रप्रसिद्धः । अनेकप्राणिकर्मफलोपभोगयोग्यानेकाधिष्ठानवल्लोकदेहनिर्माणेन लिङ्गेन यथाशास्त्रप्रदर्शितेन पुरप्रासादादिनिर्माणलिङ्गेन तद्विषयकौशलज्ञानवांस्तत्कर्ता तक्षादिरिवेश्वरः सर्वज्ञो जगतः कर्ता द्वितीयश्चेतन आत्मा अवगम्यते । 'यतो वाचो निवर्तन्ते' 'नेति नेति' इत्यादिशास्त्रप्रसिद्धः औपनिषदः पुरुषस्तृतीयः । एवमेते त्रय आत्मानोऽन्योन्यविलक्षणाः । तत्र कथमेक एव आत्मा अद्वितीयः असंसारीति ज्ञातुं शक्यते । तत्र जीव एव तावत्कथं ज्ञायते । नन्वेवं ज्ञायते श्रोता मन्ता द्रष्टा आदेष्टा आघोष्टा विज्ञाता प्रज्ञातेति । ननु विप्रतिषिद्ध

ज्ञायते यः श्रवणादिकर्तृत्वेनामतो मन्ताऽविज्ञातो विज्ञातेति च । तथा 'न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया' इत्यादि च । सत्यं विप्रतिषिद्धं, यदि प्रत्यक्षेण ज्ञायेत सुखादिवत् । प्रत्यक्षज्ञानं च निवार्यते 'न मतेर्मन्तारम्' इत्यादिना । ज्ञायते तु श्रवणादिलिङ्गेन, तत्र कुतो विप्रतिषेधः ? ननु श्रवणादिलिङ्गेनापि कथं ज्ञायते यावता यदा शृणोत्यात्मा श्रोतव्यं शब्दं, तदा तस्य श्रवणक्रिययैव वर्तमानत्वान्मननविज्ञानक्रिये न सम्भवतः आत्मनि परत्र वा । तथान्यत्रापि मननादिक्रियासु श्रवणादिक्रियाश्च स्वविषयेष्वेव । न हि मन्तव्यादन्यत्र मन्तुर्मननक्रिया सम्भवति । ननु मनसा सर्वमेव मन्तव्यम् । सत्यमेवं तथापि सर्वमपि मन्तव्यं मन्तारमन्तरेण न मन्तुं शक्यम् । यद्येवं किं स्यात् ? इदमत्र स्यात् सर्वस्य योऽयं मन्ता स मन्तैवेति न स मन्तव्यः स्यात् । न च द्वितीयो मन्तुर्मन्ताऽस्ति यदा स आत्मनैव मन्तव्यः तदा येन च मन्तव्य आत्मा आत्मना यश्च मन्तव्य आत्मा, तौ द्वौ प्रसज्येयाताम् । एक एवात्मा द्विधा मन्तृमन्तव्यत्वेन द्विशकलीभवेद्वंशादिवदुभयथाप्यनुपपत्तिरेव । यथा प्रदीपयोः प्रकाश्यप्रकाशकत्वानुपपत्तिः समत्वात्तद्वत् । न च मन्तुर्मन्तव्ये मननव्यापारशून्यः कालोऽस्त्यात्ममननाय । यदापि लिङ्गेनात्मानं मनुते मन्ता, तदापि पूर्ववदेव लिङ्गेन मन्तव्य आत्मा, यश्च तस्य मन्ता, तौ द्वौ प्रसज्येयाताम् । एक एव वा द्विधेति पूर्वोक्तः दोषः । न प्रत्यक्षेण नाप्यनुमानेन ज्ञायते चेत् कथमुच्यते 'स म आत्मेति विद्यात्' इति । कथं वा श्रोता मन्तेत्यादि । ननु श्रोतृत्वादिधर्मवानात्मा, अश्रोतृत्वादि च प्रसिद्धमात्मनः, किमत्र विषमं पश्यसि । यद्यपि तव न विषमं तथापि मम तु विषमं प्रतिभाति । कथम् । यदासौ श्रोता तदा न मन्ता यदा मन्ता तदा न श्रोता । तत्रैवं सति, पक्षे श्रोता मन्ता, पक्षे न श्रोता नापि मन्ता । तथाऽन्यत्रापि च । यदैवं, तदा श्रोतृत्वादिधर्मवानात्मा अश्रोतृत्वादिधर्मवान्वेति संशयस्थाने कथं तव न वैषम्यम् । यदा देवदत्तो गच्छति तदा न स्थाता गन्तैव । यदा तिष्ठति तदा न गन्ता स्थातैव । तदा अस्य पक्ष एव गन्तृत्वं स्थातृत्वं च, न नित्यं गन्तृत्वं स्थातृत्वं वा तद्वत् । तथैवात्र काणादादयः पश्यन्ति । पक्षप्राप्तेनैव श्रोतृत्वादिना आत्मोच्यते श्रोता

मन्तेत्यादिवचनात्। संयोगजत्वमयौगपद्यं च ज्ञानस्य व्याचक्षते। दर्शयन्ति चान्यत्रमना अभूवं नादर्शमित्यादि युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति च न्याय्यम्। भवत्वेवं किं तव नष्टं यद्येवं स्यात् अस्त्वेवं तवेष्टं चेत्। श्रुत्यर्थस्तु न सम्भवति। किं न श्रोता मन्तेत्यादिश्रुत्यर्थः। न, श्रोता न मन्तेत्यादिवचनात्। ननु पाक्षिकत्वेन प्रत्युक्तं त्वया। न नित्यमेव श्रोतृत्वाद्यभ्युपगमात्। 'न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यते' इत्यादिश्रुतेः। एवं तर्हि नित्यमेव श्रोतृत्वाद्यभ्युपगमे, प्रत्यक्षविरुद्धा युगपज्ज्ञानोत्पत्तिरज्ञानाभावश्चात्मनः कल्पितः स्यात्। तच्चानिष्टमिति। नोभयदोषोपपत्तिः, आत्मनः श्रुत्यादिश्रोतृत्वादिधर्मवत्त्वश्रुतेः। अनित्यानां मूर्तानां च चक्षुरादीनां दृष्ट्याद्यनित्यमेव संयोगवियोगधर्मिणाम्। यथाग्नेर्ज्वलनं तृणादिसंयोगजत्वात्तद्वत्। न तु नित्यस्यामूर्तस्यासंयोगविभागधर्मिणः संयोगजदृष्ट्याद्यनित्यधर्मवत्त्वं सम्भवति। तथा च श्रुतिः 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्याद्या। एवं तर्हि द्वे दृष्टी चक्षुषोऽनित्या दृष्टिर्नित्या चात्मनः। तथा च द्वे श्रुती श्रोत्रस्यानित्या नित्या चात्मस्वरूपस्य। तथा द्वे मती विज्ञाती बाह्यावाह्ये एवं ह्येव चेयं श्रुतिरुपपन्ना भवति 'दृष्टेर्द्रष्टा श्रुतेः श्रोता' इत्याद्या लोकेऽपि प्रसिद्धं चक्षुषस्तिमिरागमापाययोर्नष्टा दृष्टिर्जाता दृष्टिरिति चक्षुर्दृष्टेरनित्यत्वम्। तथा च श्रुतिमत्यादीनामात्मदृष्ट्यादीनां च नित्यत्वं प्रसिद्धमेव लोके। वदति हि उद्धृतचक्षुः स्वप्नेऽद्य मया भ्राता दृष्ट इति। तथावगतबाधिर्यः स्वप्ने श्रुतो मन्त्रोऽद्येत्यादि। यदि चक्षुःसंयोगजैवात्मनो नित्या दृष्टिस्तन्नाशे नश्येत् तदोद्धृतचक्षुः स्वप्ने नीलपीतादि न पश्येत्। 'न हि द्रष्टुर्दृष्टेः' इत्याद्या च श्रुतिरनुपपन्ना स्यात्, 'तच्चक्षुः पुरुषे येन स्वप्ने पश्यति' इत्याद्या च श्रुतिरनुपपन्ना स्यात्। नित्या आत्मनो दृष्टिर्बाह्यानित्यदृष्टेर्ग्राहिका। बाह्यदृष्टेश्चोपजनापायाद्यनित्यधर्मवत्त्वात्तद्ग्राहिकाया आत्मदृष्टेस्तद्वदवभासत्वमनित्यत्वादि भ्रान्तिर्निमित्तं लोकस्येति युक्तम्। यथा भ्रमणादिधर्मवदलातादिवस्तुविषयदृष्टिरपि भ्रमतीव तद्वत्। तथा च श्रुतिः 'ध्यायतीव लेलायतीव' इति। तस्मादात्मदृष्टेर्नित्यत्वान्न यौगपद्यमयौगपद्यं वास्ति। बाह्यानित्यदृष्ट्युपाधिवशात्तु लोकस्य तार्किकाणां चागमसम्प्रदायवर्जितत्वात् अनित्या आत्मनो दृष्टिरिति भ्रान्तिरुपपन्नैव। जीवेश्वरपरमात्मभेदकल्पमा

नैवैतन्निमित्तैव । तथा च अस्ति नास्तीत्याद्याश्च यावन्तो वाङ्मनसयोर्भेदा यत्रैकीभवन्ति, तद्विषयाया नित्याया दृष्टेर्निर्विशेषायाः । अस्ति नास्ति, एकं नाना, गुणवदगुणं, जानाति न जानाति, क्रियावदक्रियं, फलवदफलं, सबीजं निर्बीजं, सुखं दुःखं, मध्यममध्यं, शून्यमशून्यं, परोऽहमन्य इति वा सर्ववाक्प्रत्ययागोचरे स्वरूपे यो विकल्पयितुमिच्छति, स नूनं खमपि चर्मवद्वेष्टयितुमिच्छति, सोपानमिव च पद्भ्यामारोढुं, जले खे च मीनानां वयसां च पदं दिदृक्षते 'नेति नेति' 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिभ्यः । "को अद्धा वेद" इत्यादिमन्त्रवर्णात् ।

कथं तर्हि तस्य स स आत्मेति वेदनं, ब्रूहि केन प्रकारेण तमहं स स आत्मेति विद्याम् । अत्राख्यायिकामाचक्षते । कश्चित्किल मनुष्यो मुग्धः कैश्चिदुक्तः कस्मिंश्चिदपराधे सति धिक्त्वां नासि मनुष्य इति । स मुग्धतया आत्मनो मनुष्यत्वं प्रत्याययितुं कञ्चिदुपेत्याह ब्रवीतु भवान्कोऽहमस्मीति । स तस्य मुग्धतां ज्ञात्वाह, क्रमेण बोधयिष्यामीति । स्थावराद्यात्मभावमपोह्य न त्वममनुष्य इत्युक्त्वोपरराम । स तं मुग्धः प्रत्याह । भवान्मां बोधयितुं प्रवृत्तस्तूष्णीं बभूव किं न बोधयतीति । तादृगेव तद्भवतो वचनम् । नास्यमनुष्य इत्युक्तेऽपि मनुष्यत्वमात्मनो न प्रतिपद्यते यः, सः कथं मनुष्योऽसीत्युक्तोऽपि मनुष्यत्वमात्मनः प्रतिपद्येत ।

तस्माद्यथाशास्त्रोपदेश एवात्मावबोधविधिर्नान्यः । न ह्यग्नेर्दाह्यं तृणाद्यन्येन केनचिद्दग्धुं शक्यम् । अत एव शास्त्रमात्मस्वरूपं बोधयितुं प्रवृत्तं सदमनुष्यत्वप्रतिषेधेनैव 'नेति नेति' इत्युक्त्वोपरराम । तथा 'अनन्तरमबाह्य' 'अयमात्मा ब्रह्म' 'सर्वानुभूः' इत्यनुशासनम् । 'तत्त्वमसि' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्येवमाद्यपि च । यावदयमेवं यथोक्तमिममात्मानं न वेत्ति तावदयं बाह्यानित्यदृष्टिलक्षणमुपाधिमात्मत्वेनोपेत्य अविद्यया उपाधिधर्मानात्मनो मन्यमानो ब्रह्मादिस्तम्बपर्यन्तेषु देवतिर्यङ्नरस्थानेषु पुनः पुनरावर्तमानोऽविद्याकामकर्मवशात्संसरति । स एवं संसरन्नुपात्तदेहेन्द्रियसङ्घातं त्यजति । त्यक्त्वान्यमुपादत्ते । पुनः पुनरेवमेव नदीस्रोतोवज्जन्ममरणप्रबन्धाविच्छेदेन वर्तमानः काभिरवस्थाभिर्वर्तते इत्येतमर्थं दर्शयन्नाह श्रुतिर्वैराग्यहेतोः —

**पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतः तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म ॥ १ ॥**

अयमेवाविद्याकामकर्माभिमानवान् यज्ञादि कर्म कृत्वाऽस्माल्लोकात् धूमादिक्रमेण चन्द्रमसं प्राप्य क्षीणकर्मा वृष्ट्यादिक्रमेणेमं लोकं प्राप्य अन्नभूतः पुरुषाग्नौ हुतः । तस्मिन्पुरुषे ह वै अयं संसारी रसादिक्रमेण आदितः प्रथमतो रेतोरूपेण गर्भो भवतीत्येतदाह यदेतत्पुरुषे रेतस्तेन रूपेणेति । तच्चैतद्रेतोऽन्नमयस्य पिण्डस्य सर्वेभ्योऽङ्गेभ्योऽवयवेभ्यो रसादिलक्षणेभ्यस्तेजः साररूपं शरीरस्य सम्भूतं परिनिष्पन्नं तत्पुरुषस्यात्मभूतत्वादात्मा, तमात्मानं रेतोरूपेण गर्भीभूतमात्मन्येव स्वशरीर एवात्मानं बिभर्ति धारयति । तद्रेतो यदा यस्मिन्काले भार्यर्तुमती तस्यां योषाग्नौ स्त्रियां सिञ्चत्युपगच्छन् अथ तदैनदेतद्रेत आत्मनो गर्भभूतं जनयति पिता । तदस्य पुरुषस्य स्थानान्निर्गमनं रेतःसेककाले रेतरूपेणास्य संसारिणः प्रथमं जन्म प्रथमावस्थाभिव्यक्तिः । तदेतदुक्तं पुरस्तात् असावात्माऽमुमात्मानमित्यादिना ॥ १ ॥

**तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा । तस्मादेनां न हिनस्ति सास्यैतमात्मानमत्र गतं भावयति ॥ २ ॥**

तद्रेतो यस्यां स्त्रियां सिक्तं सत्तस्या आत्मभूयमात्मव्यतिरेकतां यथा पितुरेवं गच्छति प्राप्नोति यथा स्वमङ्गं स्तनादि तथा तद्वदेव । तस्माद्रेतोरेनां मातरं स गर्भो न हिनस्ति (१) पिटकादिवत् । यस्मात्स्तनादिस्वाङ्गवदात्मभूयं गतं तस्मान्न हिनस्ति न बाधते इत्यर्थः । सा अन्तर्वत्न्येतमस्य भर्तुरात्मानमत्रात्मन उदरे गतं प्रविष्टं बुद्ध्वा भावयति वर्द्धयति परिपालयति गर्भविरुद्धाशनादिपरिहारमनुकूलाशनाद्युपयोगं च कुर्वती ॥ २ ॥

**सा भावयित्री भावयितव्या भवति तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति । स यत्कुमारं**

---

१ पिटकादिवदिति—पिटका व्रणरूपग्रन्थिविशेषास्तद्वन्न हिनस्तीति व्यतिरेकेण दृष्टान्तः ।

**जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म ॥ ३ ॥**

सा भावयित्री वर्धयित्री भर्तुरात्मनो गर्भभूतस्य भावयितव्या वर्धयितव्या रक्षयितव्या च भर्त्रा भवति । न ह्युपकारप्रत्युपकारमन्तरेण लोके कस्यचित्केन चित्सम्बन्ध उपपद्यते । तं गर्भं स्त्री यथोक्तेन गर्भधारणविधानेन बिभर्ति धारयत्यग्रे प्राग्जन्मनः । स पिता अग्रे एव पूर्वमेव जातमात्रं कुमारं जन्मनोऽध्यूर्ध्वं जन्मनो जातं कुमारं जातकर्मादिना पिता भावयति स पिता यद्यस्मात्कुमारं जन्मनोऽध्यूर्ध्वमग्रे जातमात्रमेव जातकर्मादिना यद्भावयति तदात्मानमेव भावयति, पितुरात्मैव हि पुत्ररूपेण जायते । तथाह्युक्तं "पतिर्जायाम्प्रविशति" इत्यादि । तत्किमर्थमात्मानं पुत्ररूपेण जनयित्वा भावयतीति । उच्यते एषां लोकानां सन्तत्यै अविच्छेदायेत्यर्थः । विच्छिद्येरन्हीमे लोकाः पुत्रोत्पादनादि यदि न कुर्युः । एवं पुत्रोत्पादनादिकर्माविच्छेदेनैव सन्तताः प्रबन्धरूपेण वर्तन्ते हि यस्मादिमे लोकास्तस्मात्तदविच्छेदाय तत्कर्तव्यं न मोक्षायेत्यर्थः । तदस्य संसारिणः कुमाररूपेण मातुरुदराद्यन्निर्गमनं तद्देवारूपापेक्षया द्वितीयं जन्म द्वितीयावस्थाभिव्यक्तिः ॥ ३ ॥

**सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते । अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म ॥ ४ ॥**

अस्य पितुः सोऽयं पुत्रात्मा पुण्येभ्यः शास्त्रोक्तेभ्यः कर्मभ्यः कर्मनिष्पादनार्थं प्रतिधीयते पितुः स्थाने पित्रा यत्कर्तव्यं तत्करणाय प्रतिनिधीयते इत्यर्थः । तथा च (१) सम्प्रत्तिविद्यायां वाजसनेयके—"पित्राऽनुशिष्टोऽहं ब्रह्माहं यज्ञ इत्यादि प्रतिपद्यते" इति । अथानन्तरं पुत्रे निवेश्यात्मनो भारं अस्य पुत्रस्येतरोऽयं यः पित्रात्मा कृतकृत्यः, कर्तव्याद्दृणत्रयाद्विमुक्तः कृतकर्तव्य

(१) सम्प्रत्तिविद्यायामिति-सम्प्रत्तिः सम्प्रदानं स्वकर्तव्यस्य पुत्रे स्थापनं यत्रोच्यते सा सम्प्रत्तिविद्येत्यर्थः । पितृशरीरमातृशरीरस्वशरीररूपाणि त्रीणि स्थानानि च विवक्षन्ते । तथा च उपरितनाध्याये प्रपञ्चयिष्यते ।

इत्यर्थः, वयोगते गतवया जीर्णः सम्प्रैति म्रियते । स इतोऽस्मात्प्रयन्नेव शरीरं परित्यजन्नेव तृणजलूकावत् देहान्तरमुपाददानः कर्मचितं, पुनर्जायते । तदस्य मृत्वा प्रतिपत्तव्यं यत्तत्तृतीयं जन्म । ननु संसारतः पितुः सकाशाद्रेतोरूपेण प्रथमं जन्म । तस्यैव कुमाररूपेण मातुर्द्वितीयं जन्मोक्तम् । तस्यैव तृतीये जन्मनि वक्तव्ये प्रेतस्य पितुर्यज्जन्म तत्तृतीयमिति कथमुच्यते नैष दोषः । पितापुत्रयोरैकात्म्यस्य विवक्षितत्वात् । सोऽपि पुत्रः स्वपुत्रे भारं निधायेतः प्रयन्नेव पुनर्जायते यथा पिता । तदन्यत्रोक्तमितरत्राप्युक्तमेव भवतीति मन्यते श्रुतिः । पितापुत्रयोरेकात्मत्वात् ॥ ४ ॥

**तदुक्तमृषिणा गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा । शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥ ५ ॥**

एवं संसारन्नवस्थाभिव्यक्तित्रयेण जन्ममरणप्रबन्धारूढः सर्वो लोकः संसारसमुद्रे निपतितः कथञ्चिद्यदा श्रुत्युक्तमात्मानं विजानाति यस्यां कस्याञ्चिदवस्थायां तदेव मुक्तसर्वसंसारबन्धनः कृतकृत्यो भवतीत्येतद्वस्तु, तदृषिणा मन्त्रेणाप्युक्तमित्याह गर्भे नु मातुर्गर्भाशय एव सन् । न्विति वितर्के । अनेक जन्मान्तरभावनापरिपाकवशादेषां देवानां वागग्न्यादीनां जनिमानि जन्मानि विश्वाविश्वानि सर्वाण्यन्ववेदमहमहो अनुबुद्धवानस्मीत्यर्थः । शतमनेका बह्व्यो मा मां पुर आयसीः आयस्यो लोहमय्य इवाभेद्यानि शरीराणीत्यभिप्रायः । अरक्षन्रक्षितवत्यः संसारपाशनिर्गमनादधः । अथ श्येन इव जालं भित्वा जवसा आत्मज्ञानकृतसामर्थ्येन निरदीयं निर्गतोऽस्मि । अहो गर्भ एव शयानो वामदेव ऋषिरेवमुवाचैतत् ॥ ५ ॥

**स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत् ॥ ६ ॥ इति चतुर्थः खण्डः ॥ ४ ॥ इत्यैतरेयोपनिषदि द्वितीयोऽध्यायः ॥२॥**

स वामदेव ऋषिर्यथोक्तमात्मानमेवं विद्वानस्माच्छरीरभेदाच्छरीरस्याविद्यापरिकल्पितस्य आयसवदनिर्भेद्यस्य जननमरणाद्यनेकानर्थशताविष्टशरीर

प्रबन्धस्य परमात्मज्ञानामृतोपयोगजनितवीर्यकृतभेदाच्छरीरोत्पत्तिबीजाविद्यादिनिमित्तोपमर्दहेतोः शरीरविनाशादित्यर्थः । ऊर्ध्वः परमात्मभूतः सन्नधोभावात्संसारात् उत्क्रम्य ज्ञानावद्योतितामलसर्वात्मभावमापन्नः सन्नमुष्मिन्यथोक्तेऽजरेऽमरेऽमृतेऽभये सर्वज्ञेऽपूर्वेऽनपरेऽनन्तरेऽबाह्ये प्रज्ञानामृतैकरसे स्वर्गे लोके स्वस्मिन्नात्मन्येव स्वरूपेऽमृतः समभवदात्मज्ञानेन पूर्वमाप्तकामतया जीवन्नेव सर्वान्कामानाप्त्वेत्यर्थः । द्विर्वचनं सफलस्य सोदाहरणस्यात्मज्ञानस्य परिसमाप्तिप्रदर्शनार्थम् ॥ ६ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छङ्करभगवतः कृतौ ऐतरेयोपनिषद्भाष्ये द्वितीयोऽध्यायः ॥ २ ॥

---

## अथ तृतीयोऽध्यायः ।

**कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति ॥ १ ॥**

ब्रह्मविद्यासाधनकृतसर्वात्मभावफलावाप्तिं वामदेवाद्याचार्यपरम्परया श्रूयमाणां ब्रह्मवित्परिषद्यत्यन्तप्रसिद्धामुपलभमाना मुमुक्षवो ब्राह्मणा अधुनातना ब्रह्मजिज्ञासवोऽनित्यात्साध्यसाधनलक्षणात्संसारादाजीवभावाद्व्याविवृत्सवो विचारयन्तोऽन्योन्यं पृच्छन्ति । कथम्—

यमात्मानमयमात्मेति साक्षाद्वयमुपास्महे कः स आत्मेति, यं चात्मानमयमात्मेति साक्षादुपासीनो वामदेवोऽमृतः समभवत्तमेव वयमुपास्महे को नु खलु स आत्मेति, एवं जिज्ञासापूर्वमन्योन्यं पृच्छतामतिक्रान्तविशेषविषयश्रुतिसंस्कारजनिता स्मृतिरजायत, तं 'प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम्' 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत एतमेव पुरुषम्' अत्र द्वे ब्रह्मणी इतरेतरप्रातिकूल्येन प्रतिपन्ने इति । ते चास्य पिण्डस्यात्मभूते । तयोरन्यतर आत्मोपास्यो भवितुमर्हति । योऽत्रोपास्यः कतरः स आत्मेति विशेषनिर्धारणार्थं पुनरन्योन्यं पप्रच्छुर्विचारयन्तः । पुनस्तेषां विचारयतां विशेषविचारणास्पदविषया

मतिरभूत् । कथं, द्वे वस्तुनी अस्मिन्पिण्ड उपलभ्येते, अनेकभेदभिन्नेन करणेन येनोपलभते, यश्चैकं उपलभते, करणान्तरोपलब्धविषयस्मृतिप्रतिसन्धानात् । तत्र न तावद्येनोपलभते स आत्मा भवितुमर्हति । केन पुनरुपलभत इति, उच्यते येन वा चक्षुर्भूतेन रूपं पश्यति, येन वा शृणोति श्रोत्रभूतेन शब्दं, येन वा घ्राणभूतेन गन्धानाजिघ्रति, येन वा वाक्करणभूतेन वाचं नामात्मिकां व्याकरोति गौरश्व इत्येवमाद्यां साध्वसाध्विति च, येन वा जिह्वाभूतेन स्वादु चास्वादु च विजानातीति ॥ १ ॥

**यदेतद्धृदयं मनश्चैतत् । सञ्ज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति । सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥ २ ॥**

किं पुनस्तदेवैकमनेकधा भिन्नं करणमिति, उच्यते—यदुक्तं पुरस्तात्प्रजानां रेतो हृदयं हृदयस्य रेतो मनो, मनसा सृष्टा आपश्च वरुणश्च हृदयान्मनो मनसश्चन्द्रमाः तदेवैतद्धृदयं मनश्च, एकमेव तदनेकधा । एतेनान्तःकरणेनैकेन चक्षुर्भूतेन रूपं पश्यति; श्रोत्रभूतेन शृणोति, घ्राणभूतेन जिघ्रति, वाग्भूतेन वदति, जिह्वाभूतेन रसयति, स्वेनैव विकल्पनारूपेण मनसा (१)सङ्कल्पयति, हृदयरूपेणाध्यवस्यति । तस्मात्सर्वकरणविषयव्यापारकमेकमिदं करणं सर्वोपलब्ध्यर्थमुपलब्धुः । तथा च कौषीतकिनां 'प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति' इत्यादि । वाजसनेयके च— "मनसा ह्येव पश्यति मनसा शृणोति हृदयेन हि रूपाणि जानाति" इत्यादि । तस्माद्धृदयमनोवाच्यस्य सर्वोपलब्धिकरणत्वं प्रसिद्धम् । तदात्मकश्च प्राणो "यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः" इति हि ब्राह्मणम् । करणसंहतिरूपश्च प्राण इत्यवोचाम प्राणसंवादादौ । तस्माद्यत्पद्भ्यां प्रापद्यत तद्ब्रह्म तदुपलब्धुरुपलब्धिकरणत्वेन गुणभूतत्वान्नैव तद्वस्तु ब्रह्मोपास्यात्मा भवितुमर्हति । पारिशेष्याद्यस्योपलब्धुरुपलब्ध्यर्था एतस्य हृदयस्य मनोरूपस्य करणस्य वृत्तयो वक्ष्यमाणाः स उपलब्धोपास्य आत्मा नोऽस्माकं भवितुमर्हतीति निश्चयं कृत-

(१) विकल्पयति इति पाठः ।

वन्तः। तदन्तःकरणोपाधिस्थस्योपलब्धुः प्रज्ञानरूपस्य ब्रह्मण उपलब्ध्यर्था या अन्तःकरणवृत्तयो बाह्यान्तर्वर्तिविषयविषयास्ता इमा उच्यन्ते संज्ञानं संज्ञप्तिश्चेतनभावः, आज्ञानमाज्ञप्तिरीश्वरभावः, विज्ञानं कलादिपरिज्ञानं, प्रज्ञानं प्रज्ञप्तिः प्रज्ञता, मेधा ग्रन्थधारणसामर्थ्यं, दृष्टिरिन्द्रियद्वारा सर्वविषयोपलब्धिः, धृतिर्धारणमवसन्नानां शरीरेन्द्रियाणां ययोत्तम्भनं भवति धृत्या शरीरमुद्वहन्तीति हि वदन्ति। मतिर्मननं, मनीषा तत्र स्वातन्त्र्यं, जूतिश्चेतसो रुजादिदुःखित्वभावः, स्मृतिः स्मरणं, सङ्कल्पः शुक्लकृष्णादिभावेन सङ्कल्पनं रूपादीनां, क्रतुरध्यवसायः, असुः प्राणनादिजीवनक्रियानिमित्ता वृत्तिः, कामोऽसंनिहितविषयाकाङ्क्षा तृष्णा, वशः स्त्रीव्यतिकराद्यभिलाषः, इत्येवमाद्या अन्तःकरणवृत्तयः प्रज्ञप्तिमात्रस्योपलब्धुरुपलब्ध्यर्थत्वाच्छुद्धप्रज्ञानरूपस्य ब्रह्मण उपाधिभूतास्तदुपाधिजनितगुणनामधेयानि संज्ञानादीनि सर्वाण्येवैतानि प्रज्ञप्तिमात्रस्य प्रज्ञानस्य नामधेयानि भवन्ति न स्वतः साक्षात्। तथा चोक्तं 'प्राणन्नेव प्राणो नाम भवति' इत्यादि ॥ २ ॥

**एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव। बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वन्तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥ ३ ॥**

स एष प्रज्ञानरूप आत्मा ब्रह्मापरं सर्वशरीरस्थः प्राणः प्रज्ञात्मा अन्तःकरणोपाधिष्वनुप्रविष्टो जलभेदगतसूर्यप्रतिबिम्बवद्धिरण्यगर्भः प्राणः प्रज्ञात्मा। एष एव इन्द्रो गुणाद्देवराजो वा। एष प्रजापतिर्यः प्रथमजः शरीरी। यतो मुखादिनिर्भेदद्वारेणाग्न्यादयो लोकपाला जाताः स प्रजापतिरेष एव। येऽप्येतेऽग्न्यादयः सर्वे देवा एष एव। इमानि च सर्वशरीरोपादानभूतानि पञ्च पृथिव्यादीनि महाभूतान्यन्नादत्वलक्षणान्येतानि। किञ्चेमानि च क्षुद्रमिश्राणि

क्षुद्रैरल्पकैर्मिश्राणि, इव शब्दोऽनर्थकः, सर्पादीनि बीजानि कारणानीतराणि चेतराणि च द्वैराश्येन निर्दिश्यमानानि । कानि तानि उच्यन्ते । अण्डजानि पक्ष्यादीनि, जारुजानि जरायुजानि मनुष्यादीनि, स्वेदजानि यूकादीनि, उद्भिज्जानि वृक्षादीनि । अश्वा गावः पुरुषा हस्तिनोऽन्यच्च यत्किञ्चेदं प्राणिजातम् । किन्तत् । जङ्गमं यच्चलति पद्भ्यां गच्छति, यच्च पतत्रि आकाशेन पतनशीलं, यच्च स्थावरमचलं, सर्वं तदशेषतः प्रज्ञानेत्रं, प्रज्ञप्तिः प्रज्ञा तच्च ब्रह्मैव, नीयतेऽनेनेति नेत्रं, प्रज्ञा नेत्रं यस्य तदिदं प्रज्ञानेत्रं । प्रज्ञाने ब्रह्मण्युत्पत्तिस्थितिलयकालेषु प्रतिष्ठितं प्रज्ञाश्रयमित्यर्थः । प्रज्ञानेत्रो लोकपूर्ववत् । प्रज्ञाचक्षुर्वा सर्व एव लोकः । प्रज्ञा प्रतिष्ठा सर्वस्य जगतः । तस्मात्प्रज्ञानं ब्रह्म । तदेतत्प्रत्यस्तमितसर्वोपाधिविशेषं सन्निरंजनं निर्मलं निष्क्रियं शान्तमेकमद्वयं नेतिनेतीति सर्वविशेषापोहसंवेद्यं सर्वशब्दप्रत्ययागोचरं तदत्यन्तविशुद्धप्रज्ञोपाधिसम्बन्धेन सर्वज्ञमीश्वरं सर्वसाधारणाव्याकृतजगद्बीजप्रवर्तकं नियन्तृत्वादन्तर्यामिसञ्ज्ञं भवति । तदेव व्याकृतजगद्बीजभूतबुद्ध्यात्माभिमानलक्षणं हिरण्यगर्भसञ्ज्ञं भवति। तदेवान्तरण्डोद्भूतप्रथमशरीरोपाधिमद्विराट्प्रजापतिसञ्ज्ञं भवति । तदुद्भूताग्न्याद्युपाधिमद्देवतासञ्ज्ञं भवति । तथा विशेषशरीरोपाधिष्वपि ब्रह्मादिस्तम्बपर्यन्तेषु तत्तन्नामरूपलाभो ब्रह्मणः । तदेवैकं सर्वोपाधिभेदभिन्नं सर्वैः प्राणिभिस्तार्किकैश्च सर्वप्रकारेण ज्ञायते विकल्प्यते चानेकधा । 'एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् । इन्द्रमेकेऽपरे प्राणमपरे ब्रह्म शाश्वतम्' इत्यादि स्मृतिः ॥ ३ ॥

**स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत्समभवत् ॥ ४ ॥ इति पञ्चमः खण्डः ॥ ५ ॥ इत्यैतरेये द्वितीयारण्यके षष्ठोऽध्यायः ॥ ६ ॥**

स वामदेवोऽन्यो वैवं यथोक्तं ब्रह्म वेद प्रज्ञेनात्मना, येनैव प्रज्ञेनात्मना पूर्वे विद्वांसोऽमृता अभूवंस्तथायमपि विद्वानेतेनैव प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्य इत्यादि व्याख्यातम् । अस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वा अमृतः समभवत्समभवदित्योमिति ॥ ४-५-६ ॥

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः । इति षष्ठः खण्डः ॥ ६ ॥ इत्यैतरेये द्वितीयारण्यके सप्तमोऽध्यायः ॥ ७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीशङ्करभगवतः कृतौ बह्वृचब्राह्मणोपनिषद्भाष्यं समाप्तम् ॥

---

॥ ॐ ॥

## श्रीमच्छङ्कराचार्यविरचितभाष्ययुता

# छान्दोग्योपनिषत् ।



ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणमस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

## ॥ प्रथमोऽध्यायः ॥

'ओमित्येतदक्षरं' इत्याद्यष्टाध्यायी छान्दोग्योपनिषत् । तस्याः सङ्क्षेपतोऽर्थजिज्ञासुभ्य ऋजुविवरणमल्पग्रन्थमिदमारभ्यते। तत्र सम्बन्धः—समस्तं कर्माधिगतं प्राणादिदेवताविज्ञानसहितमर्चिरादिमार्गेण ब्रह्मप्रतिपत्तिकारणम् । केवलं च कर्म धूमादिमार्गेण चन्द्रलोकप्रतिपत्तिकारणम् । स्वभावप्रवृत्तानां च मार्गद्वयपरिभ्रष्टानां कष्टाऽधोगतिरुक्ता । न चोभयोर्मार्गयोरन्यतरस्मिन्नपि मार्ग आत्यन्तिकी पुरुषार्थसिद्धिः । इत्यतः कर्मनिरपेक्षमद्वैतात्मविज्ञानं संसारगतित्रयहेतूपमर्देन वक्तव्यमित्युपनिषदारभ्यते ।

न चाद्वैतात्मविज्ञानादन्यत्रात्यन्तिकी निःश्रेयसप्राप्तिः । वक्ष्यति हि—(१)'अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति', विपर्यये च 'स स्वराट् भवति' इति । तथा, द्वैतविषयानृताभिसन्धस्य बन्धनं, तस्करस्येव तप्तपरशुग्रहणे बन्धदाहभावः, संसारदुःखप्राप्तिश्च, इत्युक्त्वा अद्वैतात्मसत्याभिसन्धस्यातस्करस्येव तप्तपरशुग्रहणे बन्धदाहाभावः संसारदुःखनिवृत्तिर्मोक्षश्चेति ।

अत एव न कर्मसहभाव्यद्वैतात्मदर्शनम् । क्रियाकारकफलभेदोपमर्देन

---

(१) अथ येऽन्यथेति— अद्वैतात्मोपदेशानन्तर्यमथशब्दार्थः ।

'सदेकमेवाद्वितीयं' 'आत्मैवेदं सर्वम्' इत्येवमादिवाक्यजनितस्य बाधकप्रत्ययानुपपत्तेः । कर्मविधिप्रत्यय इति चेत् न । कर्तृभोक्तृस्वभावविज्ञानवतस्तज्जनितकर्मफलरागद्वेषादिदोषवतश्च कर्मविधानात् । अधिगतसकलवेदार्थस्य कर्मविधानादद्वैतज्ञानवतोऽपि कर्मेति चेत् । न । कर्माधिकृतविषयस्य कर्तृभोक्त्रादिज्ञानस्य स्वाभाविकस्य 'सदेकमेवाद्वितीयं' 'आत्मैवेदं सर्वम्' इत्यनेनोपमर्दितत्वात् । तस्मादविद्यादिदोषवत एव कर्माणि विधीयन्ते । नाद्वैतज्ञानवतः । अत एव हि वक्ष्यति–'सर्वे एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति' इति ।

तत्रैतस्मिन्नद्वैतविद्याप्रकरणेऽभ्युदयसाधनान्युपासनान्युच्यन्ते । (१) कैवल्यसंनिकृष्टफलानि चाद्वैतादीषद्विकृतब्रह्मविषयाणि 'मनोमयः प्राणशरीरः' इत्यादीनि, कर्मसमृद्धिफलानि च कर्माङ्गसम्बन्धीनि, रहस्यसामान्यान्मनोवृत्तिसामान्याच्च । यथाऽद्वैतज्ञानं मनोवृत्तिमात्रं तथाऽन्यान्युपासनानि मनोवृत्तिरूपाणीत्यस्ति हि सामान्यम् । कस्तर्ह्यद्वैतज्ञानस्योपासनानां च विशेषः ? उच्यते–स्वाभाविकस्यात्मन्यक्रियेऽध्यारोपितस्य कर्त्रादिकारकक्रियाफलभेदविज्ञानस्य निवर्तकमद्वैतविज्ञानम् । रज्ज्वादाविव सर्पाद्यध्यारोपलक्षणज्ञानस्य रज्ज्वादिस्वरूपनिश्चयः प्रकाशनिमित्तः । उपासनं तु यथाशास्त्रसमर्थितं किंचिदालम्बनमुपादाय तस्मिन्समानचित्तवृत्तिसंतानकरणं तद्विलक्षणप्रत्ययानन्तरितमिति विशेषः । तान्येतान्युपासनानि सत्त्वशुद्धिकरत्वेन वस्तुतत्त्वावभासकत्वादद्वैतज्ञानोपकारकाणि, आलम्बनविषयत्वात्सुखसाध्यानि चेति पूर्वमुपन्यस्यन्ते । तत्र कर्माभ्यासस्य दृढीकृतत्वात्कर्मपरित्यागेनोपासन एव दुःखं चेतः समर्पणं कर्तुमिति कर्माङ्गविषयमेव तावदादावुपासनमुपन्यस्यते ॥

**ॐ इत्येतदक्षरमुद्गीथमुपासीत । ओमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥**

ओमित्येतदक्षरमुद्गीथमुपासीत । ओमित्येतदक्षरं परमात्मनोऽभिधानं नेदिष्ठम् । तस्मिन्हि प्रयुज्यमाने स प्रसीदति, प्रियनामग्रहण इव लोकः । तदिहेतिपरं प्रयुक्तमभिधायकत्वाद्व्यावर्तितं शब्दस्वरूपमात्रं प्रतीयते । तथा चार्चा-

---

(१) कैवल्यसंनिकृष्टफलानि–कैवल्येन सन्निकृष्टफलत्वं नाम क्रममुक्तिफलत्वम् ।

दिवत्परस्यात्मनः प्रतीकं सम्पद्यते । एवं नामत्वेन प्रतीकत्वेन च परमात्मोपासन-साधनं श्रेष्ठमिति सर्ववेदान्तेष्ववगतम् । जपकर्मस्वाध्यायद्यन्तेषु च बहुशः प्रयोगात्प्रसिद्धमस्य श्रैष्ठ्यम् । अतस्तदेतदक्षरं वर्णात्मकमुद्गीथभक्त्यवयवत्वादु-द्गीथशब्दवाच्यमुपासीत । कर्माङ्गावयवभूत ॐ कारे परमात्मप्रतीके दृढामैकाग्र्य-लक्षणां मतिं सन्तनुयात् । स्वयमेव श्रुतिरोङ्कारस्योद्गीथशब्दवाच्यत्वे हेतुमाह–ओमिति ह्युद्गायति, ओमित्यारभ्य हि यस्मादुद्गायत्यत उद्गीथ ॐकार इत्यर्थः तस्योपव्याख्यानं तस्याक्षरस्योपव्याख्यानमेवमुपासनमेवंविभू(१)त्येवम्फलमित्यादि कथनमुपव्याख्यानम् । प्रवर्तत इति वाक्यशेषः ॥ १ ॥

**एषां भूतानां पृथिवी रसः पृथिव्या आपो रसः । अपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः ॥ २ ॥**

एषां चराचराणां भूतानां पृथिवी रसो(२)गतिः परायणमवष्टम्भः । पृथिव्या आपो रसोऽप्सु ह्योता च प्रोता च पृथिव्यतस्ता रसः पृथिव्याः । अपामोषधयो रसोऽप्परिणामत्वादोषधीनाम् । तासां पुरुषो रसोऽन्नपरिणामत्वात्पुरुषस्य । तस्यापि पुरुषस्य वाग्रसः । पुरुषावयवानां हि वाक्सारिष्ठा, अतो वाक्पुरुषस्य रस उच्यते । तस्या अपि वाच ऋग्रसः सारतरा । ऋचः साम रसः सारतरम् । तस्यापि साम्न उद्गीथः प्रकृतत्वादोङ्कारः सारतरः ॥ २ ॥

**स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः ॥३॥**

एवं स एष उद्गीथाख्य ॐकारो भूतादीनामुत्तरोत्तररसानामतिशयेन रसो रसतमः । परमः परमात्मप्रतीकत्वात् । परार्ध्योऽर्धं स्थानं, परं च तदर्धं च परार्धं तदर्हतीति परार्ध्यः, परमात्मस्थानार्हः परमात्मवदुपास्यत्वादित्यभिप्रायः । अष्टमः पृथिव्यादिरससङ्ख्यायां, यदुद्गीथो य उद्गीथः ॥ ३ ॥

---

( १ ) विभूतिः = स्तुतिः ।

( २ ) गतिरिति–गतिरित्युत्पत्तिकारणत्वम् । परायणमिति स्थितिहेतुत्वम् । अवष्टम्भ इति प्रलयनिदानत्वमुच्यते इति भेदः ।

**कतमा कतमर्क्कतमत्कतमत्साम कतमः कतम उद्गीथ इति विमृष्टं भवति ॥ ४ ॥**

वाच ऋग्रस इत्युक्तम् । कतमा सा ऋक्, कतमत्तत्साम, कतमो वा स उद्गीथः । कतमा कतमेति वीप्साऽऽदरार्था । ननु "वा बहूनां जातिपरिप्रश्ने डतमच्" इति डतमच्प्रत्यय इष्टः । न ह्यत्र ऋग्जातिबहुत्वं, कथं डतमच्प्रयोगः? नैष दोषः । जातौ परिप्रश्नो जातिपरिप्रश्न इत्येतस्मिन्विग्रहे जातावृग्व्यक्तीनां बहुत्वोपपत्तेः, न तु जातेः परिप्रश्न इति विगृह्यते । ननु जातेः परिप्रश्न इत्यस्मिन्विग्रहे कतमः कठ इत्याद्युदाहरणमुपपन्नं, जातौ परिप्रश्न इत्यत्र तु न युज्यते । तत्रापि कठादिजातावेव व्यक्तिबहुत्वाभिप्रायेण परिप्रश्न इत्यदोषः । यदि जातेः परिप्रश्नः स्यात्कतमा कतमदित्यादावुपसंख्यानं कर्तव्यं स्यात् । विमृष्टं भवति विमर्शः कृतो भवति ॥ ४ ॥

**वागेवर्क्प्राणः सामोमित्येतदक्षरमुद्गीथः । तद्वा एतन्मिथुनं यद्वाक्च प्राणश्चर्क्च साम च ॥ ५ ॥**

विमर्शे हि कृते सति प्रतिवचनोक्तिरुपपन्ना, वागेवर्क्प्राणः सामेति वागृचोरेकत्वेऽपि नाष्टसंख्यत्वव्याघातः, पूर्वस्माद्वाक्यान्तरत्वात् आप्तिगुणसिद्धये हि ओमित्येतदक्षरमुद्गीथ इति । वाक्प्राणावृक्सामयोनी इति वागेवर्क्प्राणः सामेत्युच्यते । यथाक्रममृक्सामयोन्योर्वाक्प्राणयोर्ग्रहणे हि सर्वासामृचां सर्वेषां च साम्नामवरोधः कृतः स्यात् । सर्वर्क्सामावरोधे च ऋक्सामसाध्यानां च सर्वकर्मणामवरोधः कृतः स्यात् । तदवरोधे च सर्वे कामा अवरुद्धाः स्युः । ओमित्येतदक्षरमुद्गीथ इति भक्त्याशङ्का निवर्त्यते । तद्वा एतदिति मिथुनं निर्दिश्यते । किं तन्मिथुनमित्याह—यद्वाक्च प्राणश्च सर्वर्क्सामकारणभूतौ मिथुनम् । ऋक्च साम चेति ऋक्सामकारणावृक्सामशब्दोक्तावित्यर्थः । न तु स्वतन्त्रमृक्च साम च मिथुनम् । अन्यथा हि वाक्प्राणश्चेत्येकं मिथुनमृक्साम च परमिति द्वे मिथुने स्याताम् । तथा च तद्वैतन्मिथुनमित्येकवचननिर्देशोऽनुपपन्नः स्यात् । तस्मादृक्सामयोन्योर्वाक्प्राणयोरेव मिथुनत्वम् ॥ ५ ॥

**तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् ॥ ६ ॥**

तदेतदेवंलक्षणं मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते । एवं सर्वकामाप्तिगुणविशिष्टं मिथुनमोङ्कारे संसृष्टं विद्यत इत्योङ्कारस्य सर्वकामाप्तिगुणवत्त्वं सिद्धम् । वाङ्मयत्वमोङ्कारस्य प्राणनिष्पाद्यत्वं च मिथुनेन संसृष्टत्वम् । मिथुनस्य कामापयितृत्वं प्रसिद्धमिति दृष्टान्त उच्यते—यथा लोके मिथुनौ मिथुनावयवौ स्त्रीपुंसौ यदा समागच्छतो ग्राम्यधर्मतया संयुज्येयातां तदाऽऽपयतः प्रापयतः अन्योन्यस्येतरेतरस्य तौ कामम् । तथा च स्वात्मानुप्रविष्टेन मिथुनेन सर्वकामाप्तिगुणवत्त्वमोङ्कारस्य सिद्धमित्यभिप्रायः ॥ ६ ॥

तदुपासकोऽप्युद्गाता तद्धर्मा भवतीत्याह—

**आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ७ ॥**

आपयिता ह वै कामानां यजमानस्य भवति य एतदक्षरमेवमाप्तिगुणवदुद्गीथमुपास्ते तस्यैतद्यथोक्तं फलमित्यर्थः । "तं यथा यथोपासते तदेव भवति" इति श्रुतेः ॥ ७ ॥

**तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्येव तदाहैषो एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ८ ॥**

समृद्धिगुणवांश्चोङ्कारः । कथम्—तद्वै एतत्प्रकृतमनुज्ञाक्षरमनुज्ञा च साक्षरं च तत् । अनुज्ञाऽनुमतिरोङ्कार इत्यर्थः । कथमनुज्ञेत्याह श्रुतिरेव— । यद्धि किञ्च यत्किञ्च लोके ज्ञानं धनं वानुजानाति विद्वान्धनी वा (१)तत्रानुमतिं कुर्वन्नोमित्येव तदाह । तथा च वेदे 'त्रयस्त्रिंशदित्योमिति होवाच' इत्यादि । तथा च लोकोऽपि तवेदं धनं गृह्णामीत्युक्त ओमित्येवाह । (२) अत एषा उ एवैषैव समृद्धिर्यदनुज्ञा, यानुज्ञा सा समृद्धिस्तन्मूलत्वादनुज्ञायाः । समृद्धो ह्योमित्यनुज्ञां ददाति तस्मात्समृद्धिगुणवानोङ्कार इत्यर्थः । समृद्धिगुणोपासकत्वा-

---

(१) तत्रानुमतिमिति—तत्रेतिज्ञानधनयोर्व्यक्तिः तदित्यनुमन्तव्यं साधारण्येनोच्यते ।
(२) अत एषा उ इति—उ शब्दोऽप्यर्थः समृद्धिशब्दादुपरि सम्बध्यते ।

स्तवर्मा सम्प्रमर्धयिता ह वै कामानां यजमानस्य भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यादि पूर्ववत् ॥ ८ ॥

**तेनेयं त्रयी विद्या वर्तत ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन ॥ ९ ॥**

अथेदानीमक्षरं स्तौत्युपास्यत्वात्प्ररोचनार्थम् । कथं, तेनाक्षरेण प्रकृतेनेयं ऋग्वेदादिलक्षणा त्रयी विद्या,– त्रयीविद्याविहितं कर्मेत्यर्थः न हि त्रयी विद्यैव,– आश्रावणादिभिर्वर्तते । कर्म तु तथा प्रवर्तत इति प्रसिद्धम् । कथं, ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायतीति । लिङ्गाच्च सोमयाग इति गम्यते । तच्च कर्मैतस्यैवाक्षरस्यापचित्यै पूजार्थम् । परमात्मप्रतीकं हि तत् । तदपचितिः परमात्मन एव स्यात् "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति स्मृतेः । महिम्ना रसेन, किञ्चैतस्यैवाक्षरस्य महिम्ना महत्त्वेन ऋत्विग्यजमानादिप्राणैरित्यर्थः । तथैतस्यैवाक्षरस्य रसेन व्रीहियवादि रसनिर्वृत्तेन हविषेत्यर्थः । यागहोमाद्यक्षरेण क्रियते, तच्चादित्यमुपतिष्ठते, ततो वृष्ट्यादिक्रमेण प्राणोऽन्नं च जायते, प्राणैरन्नेन च यज्ञस्तायते, अत उच्यतेऽक्षरस्य महिम्ना रसेनेति ॥९॥

**तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद । नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति॥१०॥ इति प्रथमः खण्डः ॥**

तत्राक्षरविज्ञानवतः कर्म कर्तव्यमिति स्थितमाक्षिपति - तेनाक्षरेणोभौ कुरुतः, यश्चैतदक्षरमेवं यथाव्याख्यातं वेद, यश्च कर्ममात्रविदक्षरयाथात्म्यं न वेद, तावुभौ कुरुतः कर्म । तयोश्च कर्मसामर्थ्यादेव फलं स्यात्किन्तत्राक्षरयाथात्म्यविज्ञानेनेति । दृष्टं हि लोके हरीतकीं भक्षयतोस्तद्रसाभिज्ञेतरयोर्विरेचनम् । नैवम् । यस्मान्नाना तु विद्या चाविद्या च, भिन्ने हि विद्याविद्ये । तुशब्दः पक्षव्यावृत्त्यर्थः । नोङ्कारस्य कर्माङ्गत्वमात्रविज्ञानमेव रसतमाप्तिसमृद्धिगुणवद्विज्ञानं, किं तर्हि ततोऽभ्यधिकम् । तस्मात्तदाधिक्यात्तत्फलाधिक्यं युक्तमित्यभिप्रायः । दृष्टं हि लोके वणिक्शबरयोः पद्मरागादिमणिविक्रये वणिजो विज्ञाना-

धिक्यात्फलाधिक्यम् । तस्माद्यदेव विद्यया (१) विज्ञानेन युक्तः सन्करोति कर्म श्रद्धया श्रद्धधानश्च सन् उपनिषदा(२)योगेन युक्तश्चेत्यर्थः, तदेव कर्म वीर्यवत्तरमविद्वत्कर्मणोऽधिकफलं भवतीति । विद्वत्कर्मणो वीर्यवत्तरत्ववचनादविदुषोऽपि कर्म वीर्यवदेव भवतीत्यभिप्रायः । न चाविदुषः कर्मण्यनधिकारः । औषस्त्ये काण्डेऽविदुषामप्यार्त्विज्यदर्शनात् । रसतमाप्तिसमृद्धिगुणवदक्षरमित्येकमुपासनम् । मध्ये प्रयत्नान्तरादर्शनात् । अनेकैर्हि विशेषणैरनेकधोपास्यत्वात् खल्वेतस्यैव प्रकृतस्योद्गीथाख्यस्य अक्षरस्योपव्याख्यानं भवति ॥ १० ॥ इति प्रथमः खण्डः ॥

**देवासुरा ह वै यत्र संयेतिर उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति ॥ १ ॥**

देवासुरा देवाश्चासुराश्च । देवा दीव्यतेर्द्योतनार्थस्य शास्त्रोद्भासिता इन्द्रियवृत्तयः । असुरास्तद्विपरीताः स्वेष्वेवासुषु विष्वग्विषयासु प्राणनक्रियासु रमणात्स्वाभाविक्यस्तमआत्मिका इन्द्रियवृत्तय एव । ह वै इति पूर्ववृत्तोद्भासकौ निपातौ । यत्र यस्मिन्निमित्त इतरेतरविषयापहारलक्षणे संयेतिरे, सम्पूर्वस्य यततेः सङ्ग्रामार्थत्वमिति सङ्ग्रामं कृतवन्त इत्यर्थः । शास्त्रीयप्रकाशवृत्त्यभिभवनाय प्रवृत्ताः स्वाभाविक्यस्तमोरूपा इन्द्रियवृत्तयोऽसुराः । तथा तद्विपरीताः शास्त्रार्थविषयविवेकज्योतिरात्मानो देवाः स्वाभाविकतमोरूपासुराभिभवनाय प्रवृत्ता इत्यन्योन्याभिभवोद्भवरूपः सङ्ग्राम इव सर्वप्राणिषु प्रतिदेहं देवासुरसङ्ग्रामोऽनादिकालप्रवृत्त इत्यभिप्रायः । स इह श्रुत्याख्यायिकारूपेण धर्माधर्मोत्पत्तिविवेकविज्ञानाय कथ्यते प्राणविशुद्धिविज्ञानविधिपरतया । अत उभयेऽपि देवासुराः, प्रजापतेरपत्यानीति प्राजापत्याः । प्रजापतिः कर्मज्ञानाधिकृतः पुरुषः "पुरुष एवोक्थमयमेव महान्प्रजापतिः" इति श्रुत्यन्तरात् । तस्य हि शास्त्रीयाः स्वाभाविक्यश्च करणवृत्तयो विरुद्धा अपत्यानीव तदुद्भवत्वात् । तत्तत्रोत्कर्षापकर्षलक्षणनिमित्ते ह देवा उद्गीथमुद्गीथभक्त्युपलक्षितमौद्गात्रं कर्म आजह्रुराहृतवन्तः । तस्यापि केवलस्याहरणासम्भवाज्ज्योतिष्टोमाद्याहृतवन्त इत्यभिप्रायः । तत्किमर्थमा-

(१) विज्ञानमुद्गीथाद्यक्षमात्रविषयमुपासनातिरिक्तं तेनेति यावत् ।

(२) योगेनेति—योगी देवतादिविषयमुपासनम् ।

जहुरित्युच्यते अनेन कर्मणैनानसुरानभिभविष्याम इत्येवमभिप्रायाः सन्तः ॥१॥

यदा च तदुद्गीथं कर्माजिहीर्षवस्तदा —

**ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे तं हासुराः पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः ॥ २ ॥**

ते ह देवा नासिक्यं नासिकायां भवं प्राणं चेतनावन्तं घ्राणं उद्गीथकर्तारमुद्गातारमुद्गीथभक्त्योपासाञ्चक्रिरे उपासनं कृतवन्त इत्यर्थः । नासिक्यप्राणदृष्ट्योद्गीथाख्यमक्षरमोङ्कारमुपासाञ्चक्रिर इत्यर्थः । एवं हि प्रकृतार्थपरित्यागोऽप्रकृतार्थोपादानं च न कृतं स्यात् । 'खल्वेतस्याक्षरस्य' इत्योङ्कारो ह्युपास्यतया प्रकृतः । ननूद्गीथोपलक्षितं कर्माहृतवन्त इत्यवोचः, इदानीमेव कथं नासिक्यप्राणदृष्ट्योद्गीथाख्यमक्षरमोङ्कारमुपासाञ्चक्रिर इत्यात्थ ? नैष दोषः । उद्गीथकर्मण्येव हि तत्कर्तृप्राणदेवतादृष्ट्योद्गीथभक्त्यवयवश्चोङ्कार उपास्यत्वेन विवक्षितो, न स्वतन्त्रः, अतस्तत्कर्मैव कर्माहृतवन्त इति युक्तमेवोक्तम् । तमेवं देवैर्वृतमुद्गातारं हासुराः स्वाभाविकतमआत्मको ज्योतीरूपं नासिक्यं प्राणं स्वेन पाप्मनाऽधर्मासङ्गरूपेण विविधुर्विद्धवन्तः, संसर्गं कृतवन्त इत्यर्थः । स हि नासिक्यः प्राणः कल्याणगन्धग्रहणाभिमानासङ्गाभिभूतविवेकविज्ञानो बभूव । स तेन दोषेण पाप्मसंसर्गी बभूव । तदिदमुक्तमसुराः पाप्मना विविधुरिति । यस्मादासुरेण पाप्मना विद्धस्तस्मात्तेन पाप्मना प्रेरितो घ्राणप्राणो दुर्गन्धस्य ग्राहकः प्राणिनाम् । अतस्तेनोभयं जिघ्रति लोकः सुरभि च दुर्गन्धि च पाप्मना ह्येष यस्माद्विद्धः । उभयग्रहणमविवक्षितम् । यथोभयतो हविर्निमार्ष्टीति यद्वत् । 'येनेदमप्रतिरूपं जिघ्रति' इति समानप्रकरणश्रुतेः ॥ २ ॥

**अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे तां हासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धा ॥३॥ अथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद्विद्धम् ॥४॥ अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे तद्धासुराः**

**पाप्मना विविधुस्तस्मात्तेनोभयं शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतद्विद्धम् ॥ ५ ॥ अथ ह मन उद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं सङ्कल्पते सङ्कल्पनीयं चासङ्कल्पनीयं च पाप्मना ह्येतद्विद्धम् ॥ ६ ॥**

मुख्यप्राणस्योपास्यत्वाय तद्विशुद्धत्वानुभवार्थोऽयं विचारः श्रुत्या प्रवर्तितः । अतश्चक्षुरादिदेवताः क्रमेण विचार्य आसुरेण पाप्मना विद्धा इत्यपोह्यन्ते । समानमन्यत्, अथ ह वाचं चक्षुः श्रोत्रं मन इत्यादि । अनुक्ता अप्यन्याः त्वग्रसनादिदेवता द्रष्टव्याः । 'एवमु खल्वेता देवताः पाप्मभिः' इति श्रुत्यन्तरात् ॥ ३—६ ॥

**अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे तं हासुरा ऋत्वा विदध्वंसुर्यथाश्मानमाखणमृत्वा विध्वंसेतैवम् ॥ ७ ॥**

आसुरेण पाप्मना विद्धत्वात् घ्राणादिदेवता अपोह्याथानन्तरं ह य एवायं प्रसिद्धो मुखे भवो मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे, तं हासुराः पूर्ववदृत्वा प्राप्य विदध्वंसुर्विनष्टा, अभिप्रायमात्रेण, अकृत्वा किञ्चिदपि प्राणस्य । कथं विनष्टा इत्यत्र दृष्टान्तमाह—यथा लोकेऽश्मानमाखणं, न शक्यते खनितुं कुद्दालादिभिः टङ्कैश्च च्छेत्तुं न शक्योऽखनः अखन एव आखणस्तं, ऋत्वा सामर्थ्याल्लोष्टः पांसुपिण्डः श्रुत्यन्तराच्च अश्मनि क्षिप्तोऽश्मभेदनाभिप्रायेण, तस्याश्मनः किञ्चिदप्यकृत्वा स्वयं विध्वंसेत विदीर्येत, एवं विदध्वंसुरित्यर्थः । एवं विशुद्धोऽसुरैरधर्षितत्वात्प्राण इति ॥ ७ ॥

**यथाश्मानमाखणमृत्वा विध्वंसत एवं हैव स विध्वंसते य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणः ॥ ८ ॥**

एवंविदः प्राणात्मभूतस्येदं फलमाह यथाश्मानमिति । एष एव दृष्टान्तः । एवं हैव स विध्वंसते विनश्यति । कोऽसावित्याह—य एवंविदि यथोक्तप्राणविदि पापं तदनर्हं कर्तुं कामयते इच्छति यश्चाप्येनमभिदासति हिनस्ति प्राणविदं

प्रत्याक्रोशताडनादि प्रयुङ्क्ते सोऽप्येवमेव विध्वंसत इत्यर्थः। यस्मात्स एष प्राणवित्प्राणभूतत्वादश्मारवण इवाऽऽश्मारवणोऽधर्षणीय इत्यर्थः। ननु नासिक्योऽपि प्राणो वाय्वात्मा यथा मुख्यः, तत्र नासिक्यः प्राणः पाप्मना विद्धः प्राण एव सन् मुख्यः। कथम्? नैष दोषः। नासिक्यस्तु स्थानकरणवैगुण्यादसुरैः पाप्मना विद्धः, वाय्वात्मापि सन्। मुख्यस्तु स्थानदेवताबलीयस्त्वान्न विद्ध इति युक्तम्। यथा वास्यादयः शिक्षावत्पुरुषाश्रयाः कार्यविशेषं कुर्वन्ति, नान्यहस्तगताः, तद्वद्दोषवद् घ्राणसचिवत्वाद्विद्धा घ्राणदेवता न मुख्यः॥ ८॥

**नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति। एतमु एवान्ततोऽवित्त्वोत्क्रामति व्याददात्येवान्तत इति॥ ९॥**

यस्माच्च विद्धोऽसुरैर्मुख्यस्तस्मान्नैवैतेन सुरभि दुर्गन्धि वा विजानाति लोकः घ्राणेनैव तदुभयं विजानाति। अतश्च पाप्मकार्यादर्शनादपहतपाप्माऽपहतो विनाशितोऽपनीतः पाप्मा यस्मात्सोऽयमपहतपाप्मा ह्येष विशुद्ध इत्यर्थः। यस्माच्च आत्मम्भरयः कल्याणाशासङ्गवत्त्वात् घ्राणादयो, न तथा सर्म्भरिर्मुख्यः, किं तर्हि, सर्वार्थः। कथमित्युच्यते—तेन मुख्येन यदश्नाति यत्पिबति लोकस्तेनाशितेन पीतेन चेतरान्प्राणान्घ्राणादीनवति पालयति। तेन हि तेषां स्थितिर्भवतीत्यर्थः। अतः सर्वम्भरः प्राणोऽतो विशुद्धः। कथं पुनर्मुख्याशितपीताभ्यां स्थितिरितरेषां गम्यत इति, उच्यते—एतम् एव मुख्यं प्राणं मुख्यप्राणस्य वृत्तिमन्नपाने इत्यर्थः। अन्ततोऽन्ते मरणकालेऽवित्त्वाऽलब्ध्वोत्क्रामति, घ्राणादिप्राणसमुदाय इत्यर्थः। अप्राणो हि न शक्नोत्यशितुं पातुं वा। तेन तदोत्क्रान्तिः प्रसिद्धा घ्राणादिकलापस्य। दृश्यते ह्युत्क्रान्तौ प्राणस्याशिशिषा, यतो व्याददात्येव आस्यविदारणं करोतीत्यर्थः। (१) तद्ध्यन्नालाभ उत्क्रान्तस्य लिङ्गम्॥ ९॥

**तं हाङ्गिरा उद्गीथमुपासाञ्चक्र एतमु**
**एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः॥ १०॥**

---

१ तद्ध्यन्नालाभेति—तदिति मुखव्यादानमुच्यते। अन्नग्रहणं पानोपलक्षणार्थम्।

तं हाङ्गिरास्तं मुख्यं प्राणं हाङ्गिरा इत्येवङ्गुणमुद्गीथमुपासाञ्चक्र उपासन कृतवान्बको दाल्भ्य इति वक्ष्यमाणेन सम्बध्यते। तथा बृहस्पतिरित्यायास्य इति चोपासाञ्चक्रे बक इत्येव सम्बन्धं कृतवन्तः केचित्। एतमु एवाङ्गिरसं बृहस्पतिमायास्यं प्राणं मन्यन्ते इति वचनात्। भवत्येवं यथाश्रुतासम्भवे, सम्भवति तु यथाश्रुतमृषिचोदनायामपि—श्रुत्यन्तरवत्—'तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तं' ऋषिमपि। तथा माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिरित्यादिऋषीनेव प्राणमापादयति श्रुतिः। तथा तानप्यृषीन्प्राणोपासकानङ्गिरोबृहस्पत्यायास्यान्प्राणं करोत्यभेदविज्ञानाय "प्राणो ह पिता प्राणो माता" इत्यादिवच्च। तस्मादृषिरङ्गिरा नाम प्राण एव सन्नात्मानमङ्गिरसं प्राणमुद्गीथमुपासाञ्चक्र इत्येतत्। यद्यस्मात्सोऽङ्गानां प्राणः सन्रसस्तेनासावाङ्गिरसः॥ १० ॥

**तेन तं ह बृहस्पतिरुद्गीथमुपासाञ्चक्र एतमु एव बृहस्पतिं मन्यन्ते वाग्घि बृहती तस्या एष पतिः ॥ ११ ॥**

तथा वाचो बृहत्याः पतिस्तेनासौ बृहस्पतिः ॥ ११ ॥

**तेन तं हायास्य उद्गीथमुपासाञ्चक्र एतमु एवायास्यं मन्यन्त आस्याद्यदयते ॥ १२ ॥**

तथा यद्यस्मादास्यादयते निर्गच्छति तेनायास्य ऋषिः प्राण एव सन्नित्यर्थः। तथान्योऽप्युपासक आत्मानमेवाङ्गिरसादिगुणं प्राणमुद्गीथमुपासीतेत्यर्थः॥ १२ ॥

**तेन तं ह बको दाल्भ्यो विदाञ्चकार। स ह नैमिशीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायति ॥ १३ ॥**

न केवलमङ्गिरःप्रभृतय उपासाञ्चक्रिरे। तं ह बको नाम दल्भस्यापत्यं दाल्भ्यो विदाञ्चकार यथादर्शितं प्राणं विज्ञातवान्। विदित्वा च स ह नैमिशीयानां सत्रिणामुद्गाता बभूव। स च प्राणविज्ञानसामर्थ्यादेभ्यो नैमिशीयेभ्यः कामानागायति स्म ह आगीतवान्किलेत्यर्थः॥ १३ ॥

**आगाता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ॥ १४ ॥ इति द्वितीयः खण्डः ॥**

तथान्योऽप्युद्गाताऽऽगाता ह वै कामानां भवति, य एतदेवं विद्वान्यथोक्तगुणं प्राणमक्षरमुद्गीथमुपास्ते, तस्यैतद् दृष्टं फलमुक्तम् । प्राणात्मभावस्त्वदृष्टं 'देवो भूत्वा देवानप्येति' इति श्रुत्यन्तरात्सिद्ध एवेत्यभिप्रायः । इत्यध्यात्मं एतदात्मविषयमुद्गीथोपासनमित्युक्तोपसंहारः, अधिदैवतोद्गीथोपासने वक्ष्यमाणे बुद्धिसमाधानार्थः ॥ १४ ॥ इति द्वितीयः खण्डः ॥

**अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीतोद्यन्वा एष प्रजाभ्य उद्गायति । उद्यंस्तमो भयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद ॥ १ ॥**

अथानन्तरमधिदैवतं देवताविषयमुद्गीथोपासनं प्रस्तुतमित्यर्थः अनेकधोपास्यत्वादुद्गीथस्य । य एवासावादित्यस्तपति तमुद्गीथमुपासीत आदित्यदृष्ट्योद्गीथमुपासीतेत्यर्थः । तमुद्गीथमित्युद्गीथशब्दोऽक्षरवाची सन्कथमादित्ये वर्तते इति उच्यते—उद्यन्नुद्गच्छन्वै । एष प्रजाभ्यः प्रजार्थमुद्गायति प्रजानामन्नोत्पत्त्यर्थम् । न ह्यनुद्यति तस्मिन्व्रीह्यादेः निष्पत्तिः स्यादत उद्गायतीवोद्गायति, यथैवोद्गाताऽन्नार्थमत उद्गीथः सवितेत्यर्थः । किञ्चोद्यन्नैशं तमस्तज्जं च भयं प्राणिनामपहन्ति । तमेवङ्गुणं सवितारं यो वेद सोऽपहन्ता नाशयिता ह वै भयस्य जन्ममरणादिलक्षणस्यात्मनस्तमसश्च तत्कारणस्याज्ञानलक्षणस्य भवति ॥ १ ॥

यद्यपि स्थानभेदात्प्राणादित्यौ भिन्नाविव लक्ष्येते तथापि न स तत्त्वभेदस्तयोः । कथम्—

**समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिमममुं चोद्गीथमुपासीत ॥ २ ॥**

समान उ एव तुल्य एव प्राणः सवित्रा गुणतः सविता च प्राणेन । यस्मादुष्णोऽयं प्राण उष्णश्चासौ सविता । किञ्च स्वर इतीमं प्राणमाचक्षते कथयन्ति, तथा स्वर इति प्रत्यास्वर इति चामुं सवितारम् । यस्मात्प्राणः स्वरत्येव न पुनर्मृतः प्रत्यागच्छति, सविता त्वस्तमित्वा पुनरप्यहन्यहनि प्रत्यागच्छति,

अतः प्रत्यास्वरः। अस्माद्गुणतो नामतश्च समानावितरेतरं प्राणादित्यौ। अतः तत्त्वाभेदादेतं प्राणमिमममुं चादित्यमुद्गीथमुपासीत ॥ २ ॥

**अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानः । अथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक् । तस्मादप्राणन्ननपानन्वाचमभिव्याहरति ॥ ३ ॥**

अथ खल्विति प्रकारान्तरेणोपासनमुद्गीथस्योच्यते, व्यानमेव वक्ष्यमाणलक्षणं प्राणस्यैव वृत्तिविशेषमुद्गीथमुपासीत । अधुना तस्य तत्त्वं निरूप्यते—यद्वै पुरुषः प्राणिति मुखनासिकाभ्यां वायुं बहिर्निःसारयति स प्राणाख्यो वायोर्वृत्तिविशेषो, यदपानित्यपश्वसिति ताभ्यामेवान्तराकर्षति वायुं सोऽपानोऽपानाख्या वृत्तिः । ततः किमिति, उच्यते—अथ य उक्तलक्षणयोः प्राणापानयोः सन्धिस्तयोरन्तरा वृत्तिविशेषः स व्यानः, यः साङ्ख्यादिशास्त्रप्रसिद्धः, श्रुत्या विशेषनिरूपणान्नासौ व्यान इत्यभिप्रायः । कस्मात्पुनः प्राणापानौ हित्वा महतायासेन व्यानस्यैवोपासनमुच्यते । वीर्यवत्कर्महेतुत्वात् । कथं वीर्यवत्कर्महेतुत्वमित्याह—यो व्यानः सा वाक् । व्यानकार्यत्वाद्वाचः । यस्माद्व्याननिर्वर्त्या वाक् तस्मादप्राणन्ननपानन्प्राणापानव्यापारावकुर्वन्वाचमभिव्याहरत्युच्चारयति लोकः ॥ ३ ॥

**या वाक्सर्क्तस्मादप्राणन्ननपानन्नृचमभिव्याहरति यर्क्तत्साम तस्मादप्राणन्ननपानन्साम गायति यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति ॥ ४ ॥**

तथा वाग्विशेषामृचमृक्संस्थं च साम, सामावयवं चोद्गीथमप्राणन्ननपानन् व्यानेनैव निर्वर्तयतीत्यभिप्रायः ॥ ४ ॥

**अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥ ५ ॥**

न केवलं वागाद्यभिव्याहरणमेव, अतोऽस्मादन्यान्यपि यानि वीर्यवन्ति कर्माणि प्रयत्नाधिक्यनिर्वर्त्यानि यथाग्नेर्मन्थनं, आजेर्मर्यादायाः सरणं धावनं, दृढस्य

किं ततोऽन्यद्यथोक्तादतिशिष्यतेऽवतिष्ठते, न किञ्चनावतिष्ठत इत्यभिप्रायः ॥ ४ ॥

**स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥**

एवमन्तेवासिभिश्चोदितः स आचार्यो ब्रूयात्तन्मतिमपनयन् । कथम् । अस्य देहस्य जरयैतद्यथोक्तमन्तराकाशाख्यं ब्रह्म यस्मिन्सर्वं समाहितं न जीर्यति देहवन्न विक्रियत इत्यर्थः । न चास्य वधेन शस्त्रादिघातेनैतद्धन्यते यथाकाशं, किमु ततोऽपि सूक्ष्मतरमशब्दमस्पर्शं ब्रह्म देहेन्द्रियादिदोषैर्न स्पृश्यत इत्यर्थः । कथं देहेन्द्रियादिदोषैर्न स्पृश्यते इत्येतस्मिन्नवसरे वक्तव्यं प्राप्तं, (१)तत्प्रकृतव्यासङ्गो मा भूदिति नोच्यते । इन्द्रविरोचनाख्यायिकायां उपरिष्टाद्वक्ष्यामो युक्तितः । एतत्सत्यमवितथं ब्रह्मपुरं ब्रह्मैव पुरं ब्रह्मपुरं, शरीराख्यं तु ब्रह्मपुरं ब्रह्मोपलक्षणार्थत्वात् । तत्त्वनृतमेव । 'वाचारम्भणं विकारो नामधेयम्' इति श्रुतेः । तद्विकारेऽनृतेऽपि देहगुहे ब्रह्मोपलभ्यत इति ब्रह्मपुरमित्युक्तं व्यावहारिकम् । सत्यं तु ब्रह्मपुरमेतदेव ब्रह्म । सर्वव्यवहारास्पदत्वात् । अतोऽस्मिन्पुण्डरीकोपलक्षिते ब्रह्मपुरे सर्वे कामा, ये बहिर्भवद्भिः प्रार्थ्यन्ते, तेऽस्मिन्नेव स्वात्मनि समाहिताः । अतस्तत्प्राप्त्युपायमेवानुतिष्ठत बाह्यविषयतृष्णां त्यजतेत्यभिप्रायः । एष आत्मा भवतां स्वरूपम् । शृणुत तस्य लक्षणम् । अपहतपाप्मा अपहतः पाप्मा धर्माधर्माख्यो यस्य सोऽयमपहतपाप्मा । । तथा विजरो विगतजरो विमृत्युश्च । तदुक्तं पूर्वमेव न वधेनास्य हन्यत इति । किमर्थं पुनरुच्यते । यद्यपि देहसम्बन्धिभ्यां जरामृत्युभ्यां न सम्बध्यते, ( २ ) अन्यथापि सम्बन्धस्ताभ्यां स्यादित्याशङ्कानिवृत्त्यर्थम् । विशोको विगतशोकः । शोको नामेष्टादिवियोगनिमित्तो मानसः सन्तापः । विजिघत्सो विगताशनेच्छः । अपिपासो-

( १ ) प्रकृतन्दहरोपासना तत्र व्यासङ्गो विक्षेपः इति यावत् ।

( २ ) अन्यथापि—अन्यथा देहसम्बन्धं विना स्वभावतोऽपीत्यर्थः ।

ऽपानेच्छः । ननु अपहतपाप्मत्वेन जरादयः शोकान्ताः प्रतिषिद्धा एव भवन्ति । कारणप्रतिषेधात् । धर्माधर्मकार्या हि ते इति । जरादिप्रतिषेधेन वा धर्माधर्मयोः कार्याभावे विद्यमानयोरप्यसत्समत्वमिति पृथक्प्रतिषेधोऽनर्थकः स्यात् । सत्यमेवं, तथापि धर्मकार्यानन्दव्यतिरेकेण स्वाभाविकानन्दो यथेश्वरे 'विज्ञानमानन्दं ब्रह्म' इति श्रुतेः, तथाऽधर्मकार्यजरादिव्यतिरेकेणापि जरादिदुःखस्वरूपं स्वाभाविकं स्यादित्याशङ्क्येत । अतो युक्तस्तन्निवृत्तये जरादीनां धर्माधर्माभ्यां पृथक्प्रतिषेधः जरादिग्रहणं सर्वदुःखोपलक्षणार्थम् । पापनिमित्तानां तु दुःखानामानन्त्यात्प्रत्येकं च तत्प्रतिषेधस्याशक्यत्वात् सर्वदुःखप्रतिषेधार्थं युक्तमेवापहतपाप्मत्ववचनम् । सत्या अवितथाः कामा यस्य सोऽयं सत्यकामः । वितथा हि संसारिणां कामाः । ईश्वरस्य तद्विपरीताः । तथा कामहेतवः सङ्कल्पा अपि सत्या यस्य स सत्यसङ्कल्पः । सङ्कल्पाः कामाश्च शुद्धसत्त्वोपाधिनिमित्ता ईश्वरस्य । चित्रगुवत् । न स्वतो 'नेति नेति' इत्युक्तत्वात् । यथोक्तलक्षण एवात्मा विज्ञेयो गुरुभ्यः शास्त्रतश्च आत्मसंवेद्यतया च स्वाराज्यकामैः न चेद्विज्ञायते को दोषः स्यादिति, शृणुतात्र दोषं दृष्टान्तेन । यथा ह्येवेह लोके प्रजा अन्वाविशन्त्यनुवर्तन्ते यथानुशासनं, यथेह प्रजा अन्यं स्वामिनं मन्यमानाः तस्य स्वामिनो यथा यथानुशासनं तथा तथान्वाविशन्ति । किम् । यं यमन्तं प्रत्यन्तं जनपदं क्षेत्रभागं वाभिकामा अर्थिन्यो भवन्त्यात्मबुद्ध्यनुरूपं, तं तमेव च प्रत्यन्तादिमुपजीवन्तीति । एष दृष्टान्तोऽस्वातन्त्र्यदोषं प्रति पुण्यफलोपभोगे ॥ ५ ॥

**तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥ इति प्रथमः खण्डः ॥**

अथान्यो दृष्टान्तः क्षयं प्रति तद्यथेहेत्यादिः। तत्तत्र यथेह लोके तासामेव स्वाम्यनुशासनानुवर्तिनीनां प्रजानां सेवादिजितो लोकः पराधीनोपभोगः क्षीयतेऽन्तवान्भवति । अथेदानीं दार्ष्टान्तिकमुपसंहरति एवमेवामुत्र अग्निहोत्रादिपुण्यजितो लोकः पराधीनोपभोगः क्षीयत एवेति । उक्तो दोष एषामिति विषयं

दर्शयति तद्य इत्यादिना । तत्तत्र ये इहास्मिँल्लोके ज्ञानकर्मणोरधिकृता योग्याः सन्त आत्मानं यथोक्तलक्षणं शास्त्राचार्योपदिष्टमननुविद्य यथोपदेशमनुस्वसंवेद्यतामकृत्वा व्रजन्ति देहादस्मात्प्रयन्ति, य एतांश्च यथोक्तान्सत्यान् सत्यसङ्कल्पकार्यांश्च स्वात्मस्थान्कामानननुविद्य व्रजन्ति, तेषां सर्वेषु लोकेष्वकामचारोऽस्वतन्त्रतो भवति । यथा राजानुशासनानुवर्तिनीतां प्रजानामित्यर्थः । अथ येऽन्य इह लोक आत्मनं शास्त्राचार्योपदेशमनुविद्य स्वात्मसंवेद्यतामापाद्य व्रजन्ति यथोक्तांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति, राज्ञ इव सार्वभौमस्येह लोके ॥ ६ ॥ इति प्रथमः खण्डः ॥

**स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते ॥ १ ॥**

कथं सर्वेषु लोकेषु कामचारो भवतीति, उच्यते—य आत्मानं यथोक्तलक्षणं हृदि साक्षात्कृतवान् वक्ष्यमाणब्रह्मचर्यादिसाधनसम्पन्नः संस्तत्स्थांश्च सत्यान्कामान्स त्यक्तदेहो यदि पितृलोककामः, पितरो जनयितारस्त एव सुखहेतुत्वेन भोग्यत्वाल्लोका उच्यन्ते तेषु कामो यस्य तैः पितृभिः सम्बन्धेच्छा यस्य भवति तस्य सङ्कल्पमात्रादेव पितरः समुत्तिष्ठन्त्यात्मसम्बन्धितामापद्यन्ते । विशुद्धसत्त्वतया सत्यसङ्कल्पत्वादीश्वरस्येव । तेन पितृलोकेन भोगेन सम्पन्नः सम्पत्तिरिष्टप्राप्तिस्तया समृद्धो महीयते पूज्यते वर्धते वा महिमानमनुभवति ॥ १ ॥

**अथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन सम्पन्नो महीयते ॥ २ ॥ अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयते ॥ ३ ॥ अथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयते ॥ ४ ॥ अथ यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयते ॥ ५ ॥ अथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन**

गन्धमाल्यलोकेन सम्पन्नो महीयते ॥ ६ ॥ अथ यद्यन्नपानलोककामो भवति सङ्कल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन सम्पन्नो महीयते ॥ ७ ॥ अथ यदि गीतवादित्रलोककामो भवति सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन सम्पन्नो महीयते ॥ ८ ॥ अथ यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते ॥ ९ ॥

समानमन्यत् । मातरो जनयित्र्योऽतीताः सुखहेतुभूताः सामर्थ्यात् । न हि दुःखहेतुभूतासु ग्रामसूकरादिजन्मनिमित्तासु मातृषु विशुद्धसत्त्वस्य योगिन इच्छा तत्सम्बन्धो वा युक्तः ॥ ६–९ ॥

यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते ॥ १० ॥ इति द्वितीयः खण्डः ॥

यं यमन्तं प्रदेशमभिकामो भवति, यं च कामं कामयते यथोक्तव्यतिरेकेणापि, सोऽस्यान्तः प्राप्तोऽभिष्टः कामश्च सङ्कल्पादेव समुत्तिष्ठत्यस्य । तेनेच्छाविघातजया अभिप्रेतार्थप्राप्त्या च सम्पन्नो महीयत इत्यर्थः ॥ १० ॥ इति द्वितीयः खण्डः ॥

त इमे सत्याः कामा अनृतापिधानास्तेषां सत्यानां सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥ १ ॥

यथोक्तात्मध्यानसाधनानुष्ठानं प्रति साधकानामुत्साहजननार्थमनुक्रोशन्नाह—कष्टमिदं खलु वर्तते यत्स्वात्मस्थाः सत्याः शक्यप्राप्या अपि त इमे सत्याः कामा अनृतापिधानाः तेषामात्मस्थानां स्वाश्रयाणामेव सतामनृतं बाह्यविषयेषु स्वैरभोजनाच्छादनादिषु तृष्णा तन्निमित्तं च स्वेच्छाप्रचारत्वं मिथ्याज्ञाननिमित्तत्वादनृतमित्युच्यते । तन्निमित्तं सत्यानां कामानामप्राप्तिरिति अपिधानमिवापिधानम् । कथमनृतापिधाननिमित्तं तेषामलाभ इति, उच्यते—यो यो हि यस्मादस्य जन्तोः पुत्रो भ्राता वेष्टः इतोऽस्माल्लोकात्प्रैति प्रगच्छति म्रियते,

तमिष्टं पुत्रं भ्रातरं वा स्वहृदयाकाशे विद्यमानमपीह पुनर्दर्शनायेच्छन्नपि न लभते ॥ १ ॥

**अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥ २ ॥**

अथ पुनर्ये चास्य विदुषो जन्तोर्जीवा जीवन्तीह पुत्रा भ्रात्रादयो वा, ये च प्रेता मृता इष्टाः सम्बन्धिनो, यच्चान्यदिह लोके वस्त्रान्नपानादि रत्नादि वा वस्त्विच्छन्न लभते, तत्सर्वमत्र हृदयाकाशाख्ये ब्रह्मणि गत्वा यथोक्तेन विधिना विन्दते लभते । अत्रास्मिन्हार्दाकाशे हि यस्मादस्यैते यथोक्ताः सत्याः कामा वर्तन्तेऽनृतापिधानाः । कथमिव तदन्याय्यमित्युच्यते—तत्तत्र यथा हिरण्यनिधिं हिरण्यमेव पुनर्ग्रहणाय निधातृभिर्निधीयत इति निधिस्तं हिरण्यनिधिं निहितं भूमेरधस्तान्निक्षिप्तमक्षेत्रज्ञा निधिशास्त्रैर्निधिक्षेत्रमजानन्तः ते निधेरुपर्युपरि सञ्चरन्तोऽपि निधिं न विन्देयुः शक्यवेदनमपि । एवमेवेमा अविद्यावत्यः सर्वा इमाः प्रजा यथोक्तं हृदयाकाशाख्यं ब्रह्मलोकं ब्रह्मैव लोको ब्रह्मलोकस्तमहरहः प्रत्यहं गच्छन्त्योऽपि सुषुप्तकाले न विन्दन्ति न लभन्ते, एषोऽहं ब्रह्मलोकभावमापन्नोऽस्म्यद्येति । अनृतेन हि यथोक्तेन हि यस्मात्प्रत्यूढा हृताः स्वरूपादविद्यादिदोषैर्बहिरपकृष्टा इत्यर्थः । अतः कष्टमिदं वर्तते जन्तूनां यत्स्वायत्तमपि ब्रह्म न लभ्यत इत्यभिप्रायः ॥ २ ॥

**स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ३ ॥**

स वै य 'आत्मापहतपाप्मा' इति प्रकृतो वैशब्देन तं स्मारयति । एष विवक्षित आत्मा हृदि हृदयपुण्डरीक आकाशशब्देनाभिहितः । तस्यैतस्य हृदयस्यैतदेव निरुक्तं निर्वचनं नान्यत् । हृद्ययमात्मा वर्तत इति यस्मात्तस्मात् हृदयं हृदयनामनिर्वचनप्रसिद्ध्यापि स्वहृदय आत्मेत्यवगन्तव्यमित्यभिप्रायः । अहरहर्वै

प्रत्यहमेवंवित् हृदयमात्मेति जानन्स्वर्गं लोकं हार्दं ब्रह्मेति प्रतिपद्यते। नन्वनेवंविदपि सुषुप्तकाले हार्दं ब्रह्म प्रतिपद्यत एव, 'सता सोम्य तदा सम्पन्नः' इत्युक्तत्वात्। बाढमेवं तथाप्यस्ति विशेषः। यथा जानन्नजानंश्च सर्वो जन्तुः सद्ब्रह्मैव, तथापि तत्त्वमसीति प्रतिबोधितो विद्वान्सदेव नान्योऽस्मीति जानन्सदेव भवति। एवमेव विद्वानविद्वांश्च सुषुप्ते यद्यपि सत्सम्पद्यते तथाप्येवंविदेव स्वर्गं लोकमेतीत्युच्यते। देहपातेऽपि विद्याफलस्यावश्यम्भावित्वादित्येष विशेषः ॥ ३ ॥

**अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥ ४ ॥**

सुषुप्तकाले स्वेनात्मना सता सम्पन्नः सन्सम्यक्प्रसीदतीति जाग्रत्स्वप्नयोः विषयेन्द्रियसंयोगजातं कालुष्यं जहातीति सम्प्रसादशब्दो यद्यपि सर्वजन्तूनां साधारणः तथाप्येवंवित्स्वर्गं लोकमेतीति प्रकृतत्वादेष सम्प्रसाद इति सन्निहितवचनविशेषणात्सोऽयं शरीरादस्माच्छरीरात्समुत्थाय शरीरात्मभावनां परित्यज्येत्यर्थः। न त्वासनादिव समुत्थायेतीह युक्तम्। स्वेन रूपेणेति विशेषणात्। न ह्यन्यत उत्थाय स्वरूपं सम्पत्तव्यम्। स्वरूपमेव हि तन्न भवति यत् इति अध्याहारेण प्रतिपत्तव्यं चेत्स्यात्। परं परमात्मलक्षणं विज्ञप्तिस्वभावं ज्योतिरुपसम्पद्य स्वाभाव्यमुपगम्येत्येतत्। स्वेनात्मीयेन रूपेणाभिनिष्पद्यते, (१)प्रागेतस्याः स्वरूपसम्पत्तेरविद्यया देहमेवापरं रूपमात्मत्वेनोपगत इति तदपेक्षयेदमुच्यते स्वेन रूपेणेति। अशरीरता ह्यात्मनः स्वरूपम्। यस्त्वं परं ज्योतिःस्वरूपमापद्यते सम्प्रसाद एष आत्मेति होवाच। स ब्रूयादिति यः श्रुत्या नियुक्तोऽन्तेवासिभ्यः। किंचैतदमृतमविनाशि भूमा 'यो वै भूमा तदमृतं' इत्युक्तम्। अत एवाभयं भूम्नो द्वितीयाभावात्। अत एतद्ब्रह्मेति। तस्य ह वा एतस्य ब्रह्मणो नामाभिधानम्। किं तत्सत्यमिति। सत्यं ह्यवितथं ब्रह्म। 'तत्सत्यं स आत्मा' इति ह्युक्तम्। अथ किमर्थमिदं नाम पुनरुच्यते। तदुपासनविधिस्तुत्यर्थम् ॥ ४ ॥

( १ ) एतच्छब्दः सम्यग्ज्ञानविषयः।

**तानि ह वा एतानि त्रीण्यक्षराणि सतीयमिति तद्यत्सत्त-दमृतमथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ५ ॥ इति तृतीयः खण्डः ॥**

तानि ह वा एतानि ब्रह्मणो नामाक्षराणि त्रीण्येतानि सतीयमिति, सकार-तकारौ यमिति च । ईकारस्तकारे उच्चारणार्थोऽनुबन्धः । ह्रस्वेनैवाक्षरेण पुनः प्रतिनिर्देशात् । तेषां तत्तत्र यत्सत्सकारस्तदमृत सद्ब्रह्म अमृतवाचकत्वादमृत एव सकारस्तकारान्तो निर्दिष्टः । अथ यत्ति तकारस्तन्मर्त्यम् । अथ यद्यमक्षरं तेनाक्षरेणामृतमर्त्याख्ये पूर्वे उभे अक्षरे यच्छति नियमयति वशीकरोत्यात्मने-त्यर्थः । यद्यस्मादनेन यमित्येतेनोभे यच्छति तस्माद्यम् । संयते इव ह्येतेन यमा लक्ष्येते । ब्रह्मनामाक्षरस्यापि इदममृतत्वादिधर्मवत्वं महाभाग्यं किमुत नामवतः, इत्युपास्यत्वाय स्तूयते ब्रह्म नामनिर्वचनेन । एवं नामवतो वेत्तैवंवित् । अहरहर्वा एवंवित्स्वर्गं लोकमेतीत्युक्तार्थम् ॥ ५ ॥ इति तृतीयः खण्डः ।

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतोनिवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ॥ १ ॥**

अथ य आत्मेति । उक्तलक्षणो यः सम्प्रसादस्तस्य स्वरूपं वक्ष्यमाणैरुक्तैर-नुक्तैश्च गुणैः पुनः स्तूयते, ब्रह्मचर्यसाधनसम्बन्धार्थम् । य एष यथोक्तलक्षण आत्मा स सेतुरिव सेतुः । विधृतिर्विधरणः । अनेन हि सर्वं जगत् वर्णाश्रमादि-क्रियाकारकफलादिभेदनियमैः कर्तुरनुरूपं विदधता विधृतम् । अध्रियमाणं हीश्व-रेणेदं विश्वं विनश्येद्यतः तस्मात्स सेतुर्विधृतिः । किमर्थं स सेतुरित्याह—एषां भूरादीनां लोकानां कर्तृकर्मफलाश्रयाणामसम्भेदायाविदारणाय अविनाशायेत्येतत् । किंविशिष्टश्चासौ सेतुरित्याह—नैतं सेतुमात्मानमहोरात्रे सर्वस्य जनिमतः परिच्छेदके सती नैतं तरतः । यथान्ये संसारिणः कालेन अहोरात्रादिलक्षणेन परिच्छेद्या, न तथायं कालपरिच्छेद्य इत्यभिप्रायः । 'यस्मादर्वाक्संवत्सरोऽहोभिः

परिवर्तने' इति ग्रन्थान्तरात्। अत एवैनं न जरा तरति न प्राप्नोति। तथा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सुकृतदुष्कृते धर्माधर्मौ। प्राप्तिरत्र तरणशब्देनाभिप्रेता नातिक्रमणम्। कारणं ह्यात्मा। न शक्यं हि कारणातिक्रमणं कर्तुं कार्येण। अहोरात्रादि च सर्वं सतः कार्यम्। अन्येन ह्यन्यस्य प्राप्तिरतिक्रमणं वा क्रियेत, न तु तेनैव तस्य। न हि घटेन मृत्प्राप्यतेऽतिक्रम्यते वा। यद्यपि पूर्वं 'य आत्मापहतपाप्मा' इत्यादिना पाप्मादिप्रतिषेध उक्त एव, तथापीहायं विशेषो, न तरतीति प्राप्तिविषयत्वं प्रतिषिध्यते। तत्राविशेषेण जराद्यभावमात्रमुक्तम्। अहोरात्राद्या उक्ता अनुक्ताश्चान्ये सर्वे पाप्मान उच्यन्ते। अतोऽस्मादात्मनः सेतोर्निवर्तन्तेऽप्राप्यैवेत्यर्थः। अपहतपाप्मा ह्येष ब्रह्मैव लोको ब्रह्मलोक उक्तः ॥ १ ॥

**तस्माद्वा एतं सेतुं तीर्त्वान्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तस्माद्वा एतं सेतुं तीर्त्वापि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥**

यस्मात्पाप्मकार्यमान्ध्यादि शरीरवतः स्यान्न त्वशरीरस्य, तस्माद्वा एतमात्मानं सेतुं तीर्त्वा प्राप्यानन्धो भवति देहवत्त्वे पूर्वमन्धोऽपि सन्। तथा विद्धः सन्देहवत्त्वे स देहवियोगे सेतुं प्राप्याविद्धो भवति। तथोपतापी रोगाद्युपतापवान्सन्ननुपतापी भवति। किञ्च यस्मादहोरात्रे न स्तः सेतौ, तस्माद्वा एतं सेतुं तीर्त्वा प्राप्य नक्तमपि तमोरूपं रात्रिरपि सर्वमहरेवाभिनिष्पद्यते। विज्ञप्त्यात्मज्योतिः स्वरूपं अहरिवाहः सदैकरूपं विदुषः सम्पद्यत इत्यर्थः। सकृद्विभातः सदा विभातः सदैकरूपः स्वेन रूपेणैष ब्रह्मलोकः ॥ २ ॥

**तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥ ३ ॥ इति चतुर्थः खण्डः ॥**

तत्तत्रैवं सत्येतं यथोक्तं ब्रह्मलोकं ब्रह्मचर्येण स्त्रीविषयतृष्णात्यागेन शास्त्राचार्योपदेशमनुविन्दन्ति स्वात्मसंवेद्यतामापादयन्ति ये तेषामेव ब्रह्मचर्यसाधनवतां

ब्रह्मविदामेष ब्रह्मलोकः, नान्येषां स्त्रीविषयसम्पर्कजाततृष्णानां ब्रह्मविदामपीत्यर्थः । तेषां सर्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् । तस्मात्परममेतत्साधनं ब्रह्मचर्यं ब्रह्मविदामित्यभिप्रायः ॥ ३ ॥ इति चतुर्थः खण्डः ॥

य आत्मा सेतुत्वादिगुणैः स्तुतः तत्प्राप्तये ज्ञानसहकारिसाधनान्तरं ब्रह्मचर्याख्यं विधातव्यमित्याह । यज्ञादिभिश्च तत्स्तौति कर्तव्यार्थम्—

**अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते तद्ब्रह्मचर्येण ह्येवेष्ट्वात्मानमनुविन्दते ॥ १ ॥**

अथ यद्यज्ञ इत्याचक्षते लोके परमपुरुषार्थसाधनं कथयन्ति शिष्टाः, तद्ब्रह्मचर्यमेव । यज्ञस्यापि यत्फलं तद्ब्रह्मचर्यवाँल्लभते, अतो यज्ञोऽपि ब्रह्मचर्यमेवेति प्रतिपत्तव्यम् । कथं ब्रह्मचर्यं यज्ञ इत्याह—ब्रह्मचर्येणैव हि यस्माद्यो ज्ञाता स तं ब्रह्मलोकं यज्ञस्यापि पारम्पर्येण फलभूतं विन्दते लभते ततो यज्ञोऽपि ब्रह्मचर्यमेवेति । यो ज्ञाता इत्यक्षरानुवृत्तेर्यज्ञो ब्रह्मचर्यमेव । अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत् । कथम् । ब्रह्मचर्येणैव साधनेन तमीश्वरमिष्ट्वा पूजयित्वा अथवैषणामात्मविषयां कृत्वा तमात्मानमनुविन्दते । एषणादिष्टमपि ब्रह्मचर्यमेव ॥ १ ॥

**अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते ॥ २ ॥**

अथ यत्सन्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तत्तथा सतः परस्मादात्मन आत्मनस्त्राणं रक्षणं ब्रह्मचर्यसाधनेन विन्दते । अतः सन्त्रायणशब्दमपि ब्रह्मचर्यमेव तत् । अथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तत्, ब्रह्मचर्येणैव साधनेन युक्तः सन्नात्मानं शास्त्राचार्याभ्यामनुविद्य पश्चान्मनुते ध्यायति । अतो मौनशब्दमपि ( मौनशब्दोऽपि ? ) ब्रह्मचर्यमेव ॥ २ ॥

**अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दतेऽथ यदरण्यायनमित्याचक्षते**

**ब्रह्मचर्यमेव तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयं सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम् ॥ ३ ॥**

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तत्। यमात्मानं ब्रह्मचर्येणानुविन्दते स एष आत्मा ब्रह्मचर्यसाधनवतो न नश्यति, तस्मादनाशकायनमपि ब्रह्मचर्यमेव। अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत्। अरण्यशब्दयोरर्णवयोः ब्रह्मचर्यवतोऽयनात् अरण्यायनं ब्रह्मचर्यम्। यो ज्ञानाश्रम एषणादिष्टं सतस्त्राणात्सत्त्रायणं मननान्मौनं अनशनादनाशकायनं अरण्ययोर्गमनादरण्यायनमित्यादिभिर्महद्भिः पुरुषार्थसाधनैः स्तुतत्वाद्ब्रह्मचर्यं परमं ज्ञानस्य सहकारिकारणं साधनमित्यतो ब्रह्मविदा यत्नतो रक्षणीयमित्यर्थः। तत्तत्र हि ब्रह्मलोके अरश्च ह वै प्रसिद्धो ण्यश्चार्णवौ समुद्रौ समुद्रोपमे वा सरसी तृतीयस्यां भुवमन्तरिक्षं चापेक्ष्य तृतीया द्यौस्तस्यां तृतीयस्यामितोऽस्माल्लोकादारभ्य गण्यमानायां दिवि। तत्रैव चैरमिरा अन्नं तन्मय ऐरो मण्डस्तेन पूर्णमैरं मदीयं तदुपयोगिनां मदकरं हर्षोत्पादकं सरः। तत्रैव चाश्वत्थो वृक्षः सोमसवनो नामतः सोमोऽमृतं तत्स्रवोऽमृतस्रव इति वा। तत्रैव च ब्रह्मलोके ब्रह्मचर्यसाधनरहितैः ब्रह्मचर्यसाधनवद्भ्योऽन्यैर्न जीयत इत्यपराजिता नाम पूः पुरी ब्रह्मणो हिरण्यगर्भस्य। ब्रह्मणा च प्रभुणा विशेषेण मितं निर्मितं तच्च हिरण्मयं सौवर्णं प्रभुविमितं मण्डपमिति वाक्यशेषः ॥ ३ ॥

**तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥ इति पञ्चमः खण्डः ॥**

तत्तत्र ब्रह्मलोके एतावर्णवौ यावरण्याख्यावुक्तौ ब्रह्मचर्येण साधनेनानुविन्दन्ति ये तेषामेवैष यो व्याख्यातो ब्रह्मलोकः। तेषां च ब्रह्मचर्यसाधनवतां ब्रह्मविदां सर्वेषु लोकेषु कामचारो भवति। नान्येषामब्रह्मचर्यपराणां बाह्यविषयासक्तबुद्धीनां कदाचिदपीत्यर्थः।

नन्वत्र 'त्वमिन्द्रस्त्वं यमस्त्वं वरुण' इत्यादिभिर्यथा कश्चित्स्तूयते महार्हः,

एवमिष्टादिभिः शब्दैर्न स्त्र्यादिविषयतृष्णानिवृत्तिमात्रं स्तुत्यर्हं, किं तर्हि, ज्ञानस्य मोक्षसाधनत्वात्तदेवेष्टादिभिः स्तूयत इति केचित् । न । स्त्र्यादिबाह्यविषयतृष्णापहृतचित्तानां प्रत्यगात्मविवेकविज्ञानानुपपत्तेः । 'पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन्' इत्यादिश्रुतिस्मृतिशतेभ्यः । ज्ञानसहकारिकारणं स्त्र्यादिविषयतृष्णानिवृत्तिसाधनं विधातव्यमेवेति युक्तैव तत्स्तुतिः । ननु च यज्ञादिभिः स्तुतं ब्रह्मचर्यमिति यज्ञादीनांपुरुषार्थसाधनत्वं गम्यते । सत्यं गम्यते, न त्विह ब्रह्मलोकं प्रति यज्ञादीनां साधनत्वमभिप्रेत्य यज्ञादिभिर्ब्रह्मचर्यं स्तूयते । किं तर्हि, तेषां प्रसिद्धं पुरुषार्थसाधनत्वमपेक्ष्य । यथा इन्द्रादिभी राजा न तु यत्रेन्द्रादीनां व्यापारस्तत्रैव राज्ञ इति, तद्वत् ।

य इमेऽर्णवादयो ब्राह्मलौकिकाः सङ्कल्पजाश्च पित्रादयो भोगाः, ते किं पार्थिवा आप्याश्च यथेह लोके दृश्यन्ते तद्वदर्णववृक्षपूःस्वर्णमण्डपानि, आहोस्विन्मानसप्रत्ययमात्राणीति । किञ्चातः, यदि पार्थिवा आप्याश्च स्थूलाः स्युर्हृद्याकाशे समाधानानुपपत्तिः । पुराणे च मनोमयानि ब्रह्मलोके शरीरादीनीति वाक्यं विरुध्येत । "अशोकमहिमम्" इत्याद्याश्च श्रुतयः । ननु समुद्राः सरितः सरांसि वाप्यः कूपा यज्ञा वेदा मन्त्रादयश्च मूर्तिमन्तो ब्रह्माणमुपतिष्ठन्ते इति मानसत्वे विरुध्येत पुराणस्मृतिः । न । मूर्तिमत्त्वे प्रसिद्धरूपाणामेव तत्र गमनानुपपत्तेः । तस्मात्प्रसिद्धमूर्तिव्यतिरेकेण सागरादीनां मूर्त्यन्तरं सागरादिभिरुपात्तं ब्रह्मलोकगन्तृ कल्पनीयम् । तुल्यायां च कल्पनायां यथा प्रसिद्धा एव मानस्य आकारवत्यः पुंस्त्र्याद्या मूर्तयो युक्ताः कल्पयितुं, मानसदेहानुरूप्यसम्बन्धोपपत्तेः । दृष्टा हि मानस्यः एवाकारवत्यः पुंस्त्र्याद्या मूर्तयः स्वप्ने । ननु ता अनृता एव । 'त इमे सत्याः कामाः' इति श्रुतिस्तथा सति विरुध्येत । न । मानसप्रत्ययस्य सत्त्वोपपत्तेः । मानसा हि प्रत्ययाः स्त्रीपुरुषाद्याकाराः स्वप्ने दृश्यन्ते । ननु जाग्रद्वासनारूपाः स्वप्नदृश्या न तु तत्र स्त्र्यादयः स्वप्ने विद्यन्ते । अत्यल्पमिदमुच्यते । जाग्रद्विषया अपि मानसप्रत्ययाभिनिर्वृत्ता एव, सदीक्षाभिनिर्वृत्ततेजोबन्नमयत्वात् जाग्रद्विषयाणाम् । सङ्कल्पमूला हि लोका इति चोक्तं 'समक्लृपतां द्यावापृथिवी' इत्यत्र । सर्वश्रुतिषु च प्रत्यगात्मन उत्पत्तिः प्रलयश्च तत्रैव स्थितिश्च 'यथा वा अरा नाभौ' इत्यादिनोच्यते । तस्मान्मानसानां

बाह्यानां च विषयाणां इतरेतरकार्यकारणत्वं इष्यते एव बीजाङ्कुरवत् । यद्यपि बाह्याः एव मानसाः मानसा एव च बाह्या, नानृतत्वं तेषां कदाचिदपि स्वात्मनि भवति । ननु स्वप्ने दृष्टाः प्रतिबुद्धस्यानृता भवन्ति विषयाः । सत्यमेव । जाग्रद्बोधापेक्षं तु तदनृतत्वं न स्वतः । तथा स्वप्नबोधापेक्षं च जाग्रद्दृष्टविषयानृतत्वं न स्वतः । विशेषाकारमात्रं तु सर्वेषां मिथ्याप्रत्ययनिमित्तमिति वाचारम्भणं विकारो नामधेयमनृतं त्रीणि रूपाणीत्येव सत्यम् । तान्यप्याकारविशेषतोऽनृतं स्वतः सन्मात्ररूपतया सत्यम् । प्राक्सदात्मप्रतिबोधात्स्वविषयेऽपि सर्वे सत्यमेव स्वप्नदृश्या इवेति न कश्चिद्विरोधः । तस्मान्मानसा एव ब्रह्मलौकिका अरण्यादयः सङ्कल्पजाश्च पित्रादयः कामाः । बाह्यविषयभोगवत् अशुद्धिरहितत्वात् शुद्धसत्त्वसङ्कल्पजन्या इति निरतिशयसुखाः सत्याश्चेश्वराणां भवन्तीत्यर्थः । सत्सत्यात्मप्रतिबोधेऽपि रज्ज्वामिव कल्पिताः सर्पादयः सदात्मस्वरूपतामेव प्रतिपद्यन्ते इति सदात्मना सत्या एव भवन्ति ॥ ४ ॥ इति पञ्चमः खण्डः ॥

यस्तु हृदयपुण्डरीकगतं यथोक्तगुणविशिष्टं ब्रह्म ब्रह्मचर्यादिसाधनसम्पन्नः त्यक्तबाह्यविषयानृततृष्णः सन्नुपास्ते तस्येयं मूर्धन्यया नाड्या गतिर्वक्तव्येति नाडीखण्ड आरभ्यते—

**अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष नील एष पीत एष लोहितः ॥ १ ॥**

अथ या एता वक्ष्यमाणा हृदयस्य पुण्डरीकाकारस्य ब्रह्मोपासनस्थानस्य सम्बन्धिन्यो नाड्यो हृदयमांसपिण्डात्सर्वतो विनिःसृता आदित्यमण्डलादिव रश्मयः ताश्चैताः पिङ्गलस्य वर्णविशेषविशिष्टस्याणिम्नः सूक्ष्मरसस्य रसेन पूर्णास्तदाकारा एव तिष्ठन्ति वर्तन्त इत्यर्थः । तथा शुक्लस्य नीलस्य पीतस्य लोहितस्य च रसस्य पूर्णा इति सर्वत्राध्याहार्यम् । सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृत्तेन कफेनाल्पेन सम्पर्कात्पिङ्गलं भवति सौरं तेजः पित्ताख्यम् । तदेव च वातभूयस्त्वान्नीलं भवति । तदेव च कफभूयस्त्वाच्छुक्लम् । कफेन समतायां पीतम् । शोणितबाहुल्येन लोहितम् । वैद्यकाद्वा वर्णविशेषा अन्वेष्टव्याः कथं भवन्तीति । श्रुतिः त्वाह—आदित्यसम्बन्धादेव तत्तेजसो नाडीष्वनुगतस्यैते

वर्णविशेषा इति। कथम्। असौ वा आदित्यः पिङ्गलो वर्णत एष आदित्यः शुक्लोऽप्येष नील एष पीत एष लोहित आदित्य एव ॥ १ ॥

**तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैव-मेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥**

तस्याध्यात्मं नाडीभिः कथं सम्बन्ध इत्यत्र दृष्टान्तमाह—तत्तत्र यथा लोके महान्विस्तीर्णः पन्था महापथ आततो व्याप्त उभौ ग्रामौ गच्छतीमं च सन्निहितममुं च विप्रकृष्टं दूरस्थमेवं यथा दृष्टान्तो महापथ उभौ ग्रामौ प्रविष्ट, एवमेवैता आदित्यस्य रश्मय उभौ लोकावमुं चादित्यमण्डलं, इमं च पुरुषं गच्छन्त्युभयत्र प्रविष्टाः। यथा महापथः। कथम्। अमुष्मादादित्यमण्डलात्प्रतायन्ते सन्तता भवन्ति। ता अध्यात्ममासु पिङ्गलादिवर्णासु यथोक्तासु नाडीषु सृप्ता गताः प्रविष्टा इत्यर्थः। आभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः सन्तानभूताः सत्यस्तेऽमुष्मिन्। रश्मीनामुभयलिङ्गत्वात्ते इत्युच्यन्ते ॥ २ ॥

**तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा सम्पन्नो भवति ॥ ३ ॥**

तत्तत्रैवं सति यत्र यस्मिन्काले एतत्स्वपनमयं जीवः सुप्तो भवति। स्वापस्य द्विप्रकारत्वाद्विशेषणं समस्त इति। उपसंहृतसर्वकरणवृत्तिरित्येतत्। अतो बाह्यविषयसम्पर्कजनितकालुष्याभावात् सम्यक् प्रसन्नः सम्प्रसन्नो भवति। अत एव स्वप्नं विषयाकाराभासं मानसं स्वप्नप्रत्ययं न विजानाति नानुभवतीत्यर्थः। यदैवं सुप्तो भवत्यासु सौरतेजःपूर्णासु यथोक्तासु नाडीषु तदा सृप्तः प्रविष्टो नाडीभिर्द्वारभूताभिः हृदयाकाशं गतो भवतीत्यर्थः। न ह्यन्यत्र सत्सम्पत्तेः स्वप्नादर्शनमस्तीति सामर्थ्यान्नाडीष्विति सप्तमी तृतीयया परिणम्यते। तं सता सम्पन्नं न कश्चन न कश्चिदपि धर्माधर्मरूपः पाप्मा स्पृशतीति स्वरूपावस्थितत्वात्तदा आत्मनः। देहेन्द्रियविशिष्टं हि सुखदुःखकार्यप्रदानेन पाप्मा

स्पृशतीति, न तु सत्सम्पन्नं स्वरूपावस्थं कश्चिदपि पाप्मा स्प्रष्टुमुत्सहते । अविषयत्वात् । अन्यो ह्यन्यस्य विषयो भवति न त्वनन्यत्वं केनचित्कुतश्चिदपि सत्सम्पन्नस्य । स्वरूपप्रच्यवनं त्वात्मनो जाग्रत्स्वप्नावस्थां प्रति गमनं बाह्यविषयप्रतिबोधो अविद्याकामकर्मबीजस्य ब्रह्मविद्याहुताशादाहनिमित्तमित्यवोचाम षष्ठ एव । तदिहापि प्रत्येतव्यम् । यदैवं सुप्तः सौरेण तेजसा हि नाड्यन्तर्गतेन सर्वतः सम्पन्नो व्याप्तो भवति । अतो विशेषेण चक्षुरादिनाडीद्वारैः बाह्यविषयभोगायाप्रसृतानि करणान्यस्य तदा भवन्ति । तस्मादयं करणानां निरोधात्स्वात्मन्येवावस्थितः स्वप्नं न विजानातीति युक्तम् ॥ ३ ॥

**अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥ ४ ॥**

तत्रैवं सति अथ यत्र यस्मिन्कालेऽबलिमानमबलभावं देहस्य रोगादिनिमित्तं जरादिनिमित्तं वा कृशीभावमेतन्नयनं नीतः प्रापितो देवदत्तो भवति मुमूर्षुर्यदा भवतीत्यर्थः । तमभितः सर्वतो वेष्टयित्वासीना ज्ञातय आहुर्जानासि मां तव पुत्रं जानासि मां पितरं चेत्यादि । स मुमूर्षुर्यावदस्माच्छरीरादनुत्क्रान्तोऽनिर्गतो भवति तावत्पुत्रादीञ्जानाति ॥ ४ ॥

**अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वा होद्वा मीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥ ५ ॥**

अथ यत्र यदा, एतदिति क्रियाविशेषणमिति, अस्माच्छरीरादुत्क्रामति । अथ तदैतैरेव यथोक्ताभी रश्मिभिरूर्ध्वमाक्रमते यथाकर्मजितं लोकं प्रत्यविद्वान् । इतरस्तु विद्वान्यथोक्तसाधनसम्पन्नः स ओमित्योङ्कारेण आत्मानं ध्यायन्यथापूर्वं वा हैव, उद्वोर्ध्वं वा विद्वांश्चेत् इतरस्तिर्यङ्वेत्यभिप्रायः । मीयते प्रमीयते गच्छतीत्यर्थः । स विद्वानुत्क्रमिष्यन्यावत्क्षिप्येन्मनो यावता कालेन मनसः क्षेपः स्यात्तावता कालेनादित्यं गच्छति प्राप्नोति क्षिप्रं गच्छतीत्यर्थः । न तु तावतैव

कालेनेति विवक्षितम् । किमर्थमादित्यं गच्छतीत्युच्यते—एतद्वै खलु प्रसिद्धं ब्रह्मलोकस्य द्वारं य आदित्यः, तेन द्वारभूतेन ब्रह्मलोकं गच्छति विद्वान् । अतो विदुषां प्रपदनं, प्रपद्यते ब्रह्मलोकमनेन द्वारेणेति प्रपदनम् । निरोधनं निरोधोऽस्मादादित्यादविदुषां भवतीति निरोधः । सौरेण तेजसा देह एव निरुद्धाः सन्तो मूर्धन्यया नाड्या नोत्क्रमन्त एवेत्यर्थः । 'विष्वङ्ङन्या' इति श्लोकात् ॥ ६ ॥

**तदेष श्लोकः । शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥ ६ ॥ इति षष्ठः खण्डः ॥**

तदेतस्मिन्यथोक्तेऽर्थे एष श्लोको मन्त्रो भवति । शतं चैका चैकोत्तरशतं नाड्यो हृदयस्य मांसपिण्डभूतस्य सम्बन्धिन्यः प्रधानतो भवन्ति । आनन्त्याद्देहनाडीनाम् । तासामेका मूर्धानमभिनिःसृता विनिर्गता । तयोर्ध्वमायन्गच्छन्नमृतत्वममृतभावमेति । विष्वङ्नानागतयस्तिर्यग्विसर्पिण्य ऊर्ध्वगाश्चान्या नाड्यो भवन्ति संसारगमनद्वारभूताः, न त्वमृतत्वाय । किं तर्हि, उत्क्रमण एवोत्क्रान्त्यर्थमेव भवन्तीत्यर्थः । द्विरभ्यासः प्रकरणसमाप्त्यर्थः ॥ ६ ॥ इति षष्ठः खण्डः ॥

'अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म' इत्युक्तम् । तत्र कोऽसौ सम्प्रसादः, कथं वा तस्याधिगमो यथा सोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ? येन स्वरूपेणाभिनिष्पद्यते स किं लक्षण आत्मा ? सम्प्रसादस्य च देहसम्बन्धीनि पररूपाणि ततो यदन्यत्कथं स्वरूपम् ? इति एतेऽर्था वक्तव्या इत्युत्तरो ग्रन्थ आरभ्यते । आख्यायिका तु विद्याग्रहणसम्प्रदानविधिप्रदर्शनार्था विद्यास्तुत्यर्था च, राजसेवितं पानीयमितिवत् ।

**य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासि-**

**तव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥**

य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः । यस्योपासनायोपलब्ध्यर्थं हृदयपुण्डरीकमभिहितं यस्मिन्कामाः समाहिताः सत्या अनृतापिधाना, यदुपासनसहभावि ब्रह्मचर्यं साधनमुक्तं उपासनफलभूतकामप्रतिपत्तये च मूर्धन्यया नाड्या गतिरभिहिता, सोऽन्वेष्टव्यः शास्त्राचार्योपदेशैर्ज्ञातव्यः स विशेषेण ज्ञातुमेष्टव्यो विजिज्ञासितव्यः स्वसंवेद्यतामापादयितव्यः । किं तस्यान्वेषणाद्विजिज्ञासनाच्च स्यादित्युच्यते—स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानं यथोक्तेन प्रकारेण शास्त्राचार्योपदेशेनान्विष्य विजानाति स्वसंवेद्यतामापादयति । तस्यैतत्सर्वलोककामावाप्तिः सर्वात्मता फलं भवतीति ह किल प्रजापतिरुवाच । अन्वेष्टव्यो विजिज्ञासितव्य इति चैष नियमविधिरेव नापूर्वविधिः । एवमन्वेष्टव्यो विजिज्ञासितव्य इत्यर्थः । दृष्टार्थत्वादन्वेषणविजिज्ञासनयोः । दृष्टार्थत्वं च दर्शयिष्यति 'नाहमत्र भोग्यं पश्यामि' इत्यनेनासकृत् । पररूपेण च देहादिधर्मैः अवगम्यमानस्यात्मनः स्वरूपाधिगमे विपरीताधिगमनिवृत्तिर्दृष्टं फलमिति नियमार्थतैवास्य विधेर्युक्ता, न त्वग्निहोत्रादीनामिव अपूर्वविधित्वमिह सम्भवति ॥ १ ॥

**तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानितीन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥२॥**

तद्धोभये इत्याद्याख्यायिकाप्रयोजनमुक्तम् । तद्ध किल प्रजापतेर्वचनं उभये देवासुरा देवाश्चासुराश्च देवासुरा अनु परम्परागतं स्वकर्णगोचरापन्नमनुबुबुधिरेऽनुबुद्धवन्तः । ते चैतत्प्रजापतिवचो बुद्ध्वा किमकुर्वन्नित्युच्यते—ते होचुरुक्तवन्तोऽन्योन्यं देवाः स्वपरिषद्यसुराश्च, हन्त यद्यनुमतिर्भवतां प्रजापतिनोक्तं तमात्मानमन्विच्छामोऽन्वेषणं कुर्मो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् । इत्युक्त्वेन्द्रो हैव राजैव स्वयं देवानामितरान्देवांश्च भोगप-

रिच्छदं च सर्वं स्थापयित्वा शरीरमात्रेणैव प्रजापतिं प्रत्यभिप्रवव्राज प्रगतवां-स्तथा विरोचनोऽसुराणाम् । विनयेन गुरवोऽभिगन्तव्या इत्येतद्दर्शयति । त्रैलोक्य-राज्याच्च गुरुतरा विद्येति । यतो देवासुरराजौ महार्हभोगार्हौ सन्तौ तथा गुरुमभ्युपगतवन्तौ । तौ ह किलासंविदानावेवान्योन्यं संविदमकुर्वाणौ विद्याफलं प्रत्यन्योन्यमीर्ष्यां दर्शयन्तौ समित्पाणी समिद्भारहस्तौ प्रजापतिसकाशमा-जग्मतुरागतवन्तौ ॥ २ ॥

**तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति तौ होचतुर्य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्य-सङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोका-नाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते तमिच्छन्ताववास्तमिति ॥ ३ ॥**

तौ ह गत्वा द्वात्रिंशतं वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्यमूषतुरुषितवन्तौ । अभिप्रायज्ञः प्रजापतिस्तावुवाच—किमिच्छन्तौ किं प्रयोजनमभिप्रेत्य इच्छन्ता-ववास्तमुषितवन्तौ युवामिति । इत्युक्तौ तौ होचतुः—य आत्मेत्यादि भगवतो वचो वेदयन्ते शिष्टा अतस्तमात्मानं ज्ञातुमिच्छन्ताववास्तमिति । यद्यपि प्राक्प्र-जापतेः समीपागमनादन्योन्यमीर्ष्यायुक्तावभूतां तथापि विद्याप्राप्तिप्रयोजनगौर-वात् त्यक्तरागद्वेषमोहेर्ष्यादिदोषावेव भूत्वोषतुर्ब्रह्मचर्यं प्रजापतौ । तेनेदं प्रख्या-पितमात्मविद्यागौरवम् ॥ ३ ॥

**तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ॥ ४ ॥ इति सप्तमः खण्डः ॥**

तावेवं तपस्विनौ शुद्धकल्मषौ योग्यावुपलक्ष्य प्रजापतिरुवाच ह—य एषोऽक्षिणि पुरुषो निवृत्तचक्षुर्भिर्मृदितकषायैर्दृश्यते योगिभिर्द्रष्टा, एष आत्मा-पहतपाप्मादिगुणो, यमवोचं पुराहं, यद्विज्ञानात्सर्वलोककामावाप्तिः, एतदमृतं

भृमाख्यमत एवामयं, अत एव ब्रह्म बृहत्तममिति । अथैतत्प्रजापतिनोक्तमक्षिणि पुरुषो दृश्यत इति वचः श्रुत्वा छायारूपं पुरुषं जगृहतुः । गृहीत्वा च दृढीकरणाय प्रजापतिं पृष्टवन्तौ । अथ योऽयं हे भगवोऽप्सु परिख्यायते परि समन्ताज्ज्ञायते, यश्चायमादर्शे आत्मनः प्रतिबिम्बाकारः परिख्यायते खड्गादौ च, कतम एष एषां भगवद्भिरुक्तः, किंवैक एव सर्वेष्विति । एवं पृष्टः प्रजापतिरुवाच— एष उ एव यश्चक्षुषि द्रष्टा मयोक्त इति । एतन्मनसि कृत्वेषु सर्वेष्वन्तेषु मध्येषु परिख्यायत इति होवाच ।

ननु कथं युक्तं शिष्ययोर्विपरीतग्रहणमनुज्ञातुं प्रजापतेः विगतदोषस्याचार्यस्य सतः । सत्यमेवं, नानुज्ञानम् । कथम्, आत्मन्यध्यारोपितपाण्डित्यमहत्त्वबोद्धृत्वौ हि इन्द्रविरोचनौ तथैव च प्रथितौ लोके । तौ यदि प्रजापतिना मूढौ युवां विपरीतग्राहिणावित्युक्तौ स्यातां ततस्तयोश्चित्ते दुःखं स्यात् तज्जनिताच्च चित्तावसादात्पुनःप्रश्नश्रवणग्रहणावधारणं प्रत्युत्साहविघातः स्यात् । अतो रक्षणीयौ शिष्याविति मन्यते प्रजापतिः । गृहीतां तावत्तदुदशरावदृष्टान्तेन अपनेष्यामीति च । ननु न युक्तमेष उ एवेत्यनृतं वक्तुम् । न चानृतमुक्तम् । कथम् । आत्मनोक्तोऽक्षिपुरुषो मनसि संनिहिततरः शिष्यगृहीताच्छायात्मनः । सर्वेषां चाभ्यन्तरः 'सर्वान्तरः' इति श्रुतेः । तमेवावोचदेष उ एवेति । अतो न अनृतमुक्तं प्रजापतिना । तथा च तयोर्विपरीतग्रहणनिवृत्त्यर्थं आह ॥ ४ ॥ इति सप्तमः खण्डः ॥

**उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति ॥ १ ॥**

उदशरावे उदकपूर्णे शरावादौ आत्मानमवेक्ष्यानन्तरं यत्तत्रात्मानं पश्यन्तौ न विजानीथस्तन्मे मम प्रब्रूतमाचक्षीयाथामित्युक्तौ तौ ह तथैव उदशरावेऽवेक्षांचक्राते अवेक्षणं चक्रतुः । तथा कृतवन्तौ तौ ह प्रजापतिरुवाच किं पश्यथ इति । ननु तन्मे प्रब्रूतमित्युक्ताभ्यामुदशरावेऽवेक्षणं कृत्वा प्रजापतये न निवेदितमिदमावाभ्यां न विदितमिति । अनिवेदिते चाज्ञानहेतौ ह प्रजापति-

स्थाथ किं पश्यथ इति, तत्र कोऽभिप्राय इति । उच्यते—नैव तयोरिदमावयोरविदितमित्याशङ्काऽभूत् छायात्मन्यात्मप्रत्ययो निश्चित एवासीत् । येन वक्ष्यति 'तौ ह शान्तहृदयौ प्रवव्रजतुः' इति । न ह्यनिश्चितेऽभिप्रेतार्थे प्रशान्तहृदयत्वमुपपद्यते । तेन नोचतुरिदमावाभ्यामविदितमिति । विपरीतग्राहिणौ च शिष्यावनुपेक्षणीयाविति स्वयमेव पप्रच्छ किं पश्यथ इति । विपरीतनिश्चयापनयाय च वक्ष्यति साध्वलङ्कृतौ इत्येवमादि । तौ होचतुः—सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति । यथैवावां हे भगवो लोमनखादिमन्तौ स्व एवमेवेदं लोमनखादिसहितं आवयोः प्रतिरूपमुदशरावे पश्याव इति ॥ १ ॥

**तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥ २ ॥**

तौ ह पुनः प्रजापतिरुवाच च्छायात्मनिश्चयापनयाय— साध्वलङ्कृतौ यथा स्वगृहे सुवसनौ महार्हवस्त्रपरिधानौ परिष्कृतौ च्छिन्नलोमनखौ च भूत्वा उदशरावे पुनरीक्षेथामिति । (१)इह च नादिदेश यदज्ञातं तन्मे प्रब्रूतमिति । कथं पुनरनेन साध्वलङ्कारादि कृत्वोदशरावेऽवेक्षणेन तयोश्छायात्मग्रहोऽपनीतः स्यात् । साध्वलङ्कारसुवसनादीनामागन्तुकानां छायाकरत्वमुदशरावे यथा शरीरसम्बद्धानामेवं शरीरस्यापि च्छायाकरत्वं पूर्वं बभूवेति गम्यते । शरीरैकदेशानां च लोमनखादीनां नित्यत्वेनाभिप्रेतानामखण्डितानां छायाकरत्वं पूर्वमासीत् । छिन्नेषु च नव लोमनखादिच्छाया दृश्यतेऽतो लोमनखादिवच्छरीरस्याप्यागमापायित्वं सिद्धमित्युदशरावादौ दृश्यमानस्य तन्निमित्तस्य च देहस्यानात्मत्वं सिद्धम् । उदशरावादौ छायाकरत्वाद्देहसम्बद्धालङ्कारादिवत् । न केवलमेतावदेतेन यावत्किञ्चिदात्मीयत्वाभिमतं सुखदुःखरागद्वेषमोहादि च कादाचित्कत्वान्नखलोमादिवदनात्मेति प्रत्येतव्यम् । एवमशेषमिथ्याग्रहापनय-

(१) इह चेति पर्यायोक्तिः ।

निमित्ते साध्वलङ्कारादिदृष्टान्ते प्रजापतिनोक्ते श्रुत्वा तथा कृतवतोऽपि च्छायात्मविपरीतग्रहो नापजगाम यस्मात्तस्मात्स्वदोषेणैव केनचित्प्रतिबद्धविवेकविज्ञानौ इन्द्रविरोचनावभूतामिति, गम्यते । तौ पूर्ववदेव दृढनिश्चयौ पप्रच्छ किं पश्यथ इति ॥ २ ॥

**तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवमौ भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृताविन्त्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥**

तौ तथैव प्रतिपन्नौ यथैवेदमिति पूर्ववत्, यथा साध्वलङ्कारादिविशिष्टौ आवां स्वः एवमेवेमौ छायात्मानाविति सुतरां विपरीतनिश्चयौ बभूवतुः । यस्यात्मनो लक्षणं 'य आत्मापहतपाप्मा' इत्युक्त्वा पुनस्तद्विशेषमन्विष्यमाणयोः 'य एषोऽक्षिणि पुरुषो दृश्यते' इति साक्षादात्मनि निर्दिष्टे तद्विपरीतग्रहापनयाय उदशरावसाध्वलङ्कारदृष्टान्तेऽप्यभिहिते आत्मस्वरूपबोधाद्विपरीतग्रहो नापगतः । अतः स्वदोषेण केनचित्प्रतिबद्धविवेकविज्ञानसामर्थ्याविति मत्वा यथाभिप्रेतमेवात्मानं मनसि निधायैष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति प्रजापतिः पूर्ववत् । न तु तदभिप्रेतमात्मानम् । 'य आत्मा' इत्याद्यात्मलक्षणश्रवणेनाक्षिपुरुषश्रुत्या चोदशरावाद्युपपत्त्या च संस्कृतौ तावत् । मद्वचनं सर्वं पुनः पुनः स्मरतोः प्रतिबन्धक्षयात्स्वयमेवात्मविषये विवेको भविष्यतीति मन्वानः पुनर्ब्रह्मचर्यादेशे च तयोश्चित्तदुःखोत्पत्ति परिजिहीर्षन्कृतार्थबुद्धितया गच्छन्तावप्युपेक्षितवान्प्रजापतिः । तौ ह इन्द्रविरोचनौ शान्तहृदयौ तुष्टहृदयौ कृतार्थबुद्धी इत्यर्थः । न तु शम एव, शमश्चेत्तयोर्जातो विपरीतग्रहो विगतोऽभविष्यत् । प्रवव्रजतुर्गतवन्तौ ॥ ३ ॥

**तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वासुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुराञ्जगाम तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह महय्य आत्मा परिचर्य**

**आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ॥ ४ ॥**

एवं तयोर्गतयोन्द्रिविरोचनयो राज्ञोर्भोगासक्तयोः यथोक्तविस्मरणं स्यादित्याशङ्कयाप्रत्यचं प्रत्यक्षवचनेन च चित्तदुःखं परिजिहीर्षुस्तौ दूरं गच्छन्तावन्वीक्ष्य 'य आत्मापहतपाप्मा' इत्यादिवचनवदेतदप्यनयोः श्रवणगोचरत्वमेष्यतीति मत्वोवाच प्रजापतिः—अनुपलभ्य यथोक्तलक्षणमात्मानमननुविद्य स्वात्मप्रत्यक्षं चाकृत्वा विपरीतनिश्चयौ च भूत्वा इन्द्रविरोचनावेतौ व्रजतो गच्छेयाताम् । अतो यतरे देवा वासुरा वा किं विशेषितेन, एतदुपनिषद आभ्यां या गृहीता आत्मविद्या सेयमुपनिद्येषां देवानामसुराणां वा त एतदुपनिषदः एवंविज्ञाना एतन्निश्चया भविष्यन्तीत्यर्थः । ते किं ? पराभविष्यन्ति श्रेयोमार्गात्पराभूता बहिर्भूता विनष्टा भविष्यन्तीर्थः । स्वगृहं गच्छतोः सुरासुरराजयोर्योऽसुरराजः स ह शान्तहृदय एव सन्विरोचनोऽसुराञ्जगाम । गत्वा च तेभ्योऽसुरेभ्यः शरीरात्मबुद्धिर्या उपनिषत्तामेतामुपनिषदं प्रोवाचोक्तवान् । देहमात्रमेवात्मा पित्रोक्तः इति । तस्मादात्मैव देह इह लोके महय्यः पूजनीयस्तथा परिचर्यः परिचरणीयः, तथात्मानमेवेह लोके देहं महयन्परिचरंश्चोभौ लोकाववाप्नोतीमं चामुं च । इहलोकपरलोकयोरेव सर्वे लोकाः कामाश्चान्तर्भवन्तीति राज्ञोऽभिप्रायः ॥ ४ ॥

**तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणां ह्येषोपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति संस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥ इति अष्टमः खण्डः ॥**

तस्मात्तत्सम्प्रदायोऽद्याप्यनुवर्तत इतीह लोकेऽददानं दानमकुर्वाणमविभागशीलमश्रद्दधानं सत्कार्येषु श्रद्धारहितं यथाशक्त्ययजमानमयजनस्वभावमाहुरासुरः खल्वयं यत एवंस्वभावो बतेति खिद्यमाना आहुः शिष्टाः । असुराणां हि यस्मादश्रद्दधानतादिलक्षणैषोपनिषत् । तयोपनिषदा संस्कृताः सन्तः प्रेतस्य शरीरं कुणपं भिक्षया गन्धमाल्यान्नादिलक्षणया वसनेन वस्त्रादिनाच्छादनादिप्रकारेणालङ्कारेण ध्वजपताकादिकरणेनेत्येवं संस्कुर्वन्ति । एतेन कुणपसंस्कारेणामुं प्रेत्य प्रतिपत्तव्यं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥ इति अष्टमः खण्डः ॥

**अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥**

अथ ह किलेन्द्रोऽप्राप्यैव देवान्दैवशौर्यादिसम्पदा युक्तत्वात् गुरोर्वचनं पुनः पुनः स्मरन्नेव गच्छन्नेतद्वक्ष्यमाणं भयं स्वात्मग्रहणनिमित्तं ददर्श दृष्टवान् । उदशरावदृष्टान्तेन प्रजापतिना यदर्था न्याय उक्तस्तदेकदेशो मघवतः प्रत्यभात् बुद्धौ, येन च्छायात्मग्रहणे दोषं ददर्श । कथम् । यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते छायात्मापि साध्वलङ्कृतो भवति, सुवसने च सुवसनः परिष्कृते परिष्कृतो यथा नखलोमादिदेहावयवापगमे छायात्मापि परिष्कृतो भवति नखलोमादिरहितो भवति, एवमेवायं छायात्मायस्मिञ्छरीरे नखलोमादिभिर्देहावयवत्वस्य तुल्यत्वादन्धे चक्षुषोऽपगमेऽन्धो भवति स्रामे स्रामः । स्रामः किलैकनेत्रः तस्यान्धत्वेन गतत्वात् । चक्षुर्नासिका वा यस्य सदा स्रवति स स्रामः । परिवृक्णश्छिन्नहस्तश्छिन्नपादो वा । स्रामे परिवृक्णे वा देहे छायात्मापि तथा भवति । तथास्य देहस्य नाशमन्वेष नश्यति । अतः नाहमत्र अस्मिश्छायात्मदर्शने देहात्मदर्शने वा भोग्यं फलं पश्यामीति ॥ २ ॥

**स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन्पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥**

एवं दोषं देहच्छायात्मदर्शनेऽप्यवस्य स समित्पाणिर्ब्रह्मचर्यं वस्तुं पुनरेयाय तं ह प्रजापतिरुवाच—मघवन्यच्छान्तहृदयः प्राव्राजीः प्रगतवानसि विरोचनेन सार्धं किमिच्छन्पुनरागम इति । विजानन्नपि पुनः पप्रच्छ इन्द्राभिप्राया-

भिव्यक्तये 'यद्वेत्थ तेन मोपसीद' इति यद्वत्। तथा च स्वाभिप्रायं प्रकटमकरो-द्यथैव खल्वयमित्यादि। एवमेवेति चान्वमोदत प्रजापतिः।

ननु तुल्येऽक्षिपुरुषश्रवणे देहच्छायामिन्द्रोऽग्रहीदात्मेति देहमेव तु विरोचनः। तत्किन्निमित्तम्? तत्र मन्यते। यथेन्द्रस्य उदशरावादिप्रजापतिवचनं स्मरतो देवानप्राप्तस्यैव आचार्योक्तबुद्धया छायात्मग्रहणं तत्र दोषदर्शनं चाभूत्। न तथा विरोचनस्य किं तर्हि, देह एवात्मदर्शनं, नापि तत्र दोषदर्शनं बभूव। तद्वदेव विद्याग्रहणसामर्थ्यप्रतिबन्धदोषाल्पत्वबहुत्वापेक्षं इन्द्रविरोचनयोश्छाया-त्मदेहयोर्ग्रहणम्। इन्द्रोऽल्पदोषत्वात् 'दृश्यते' इतिश्रुत्यर्थमेव श्रद्दधानतया जग्राह, इतरश्छायानिमित्तं देहं हित्वा श्रुत्यर्थं लक्षणया जग्राह प्रजापतिनोक्तो-ऽयमिति, दोषभूयस्त्वात्। यथा किल नीलानीलयोरादर्शे दृश्यमानयोर्वाससोर्य-न्नीलं तन्महार्हमिति च्छायानिमित्तं वास एवोच्यते न च्छाया तद्वदिति विरो-चनाभिप्रायः। स्वचित्तगुणदोषवशादेव हि शब्दार्थावधारणं तुल्येऽपि श्रवणे ख्यापितं 'दाम्यत दत्त दयध्वं' इति दकारमात्रश्रवणात् श्रुत्यन्तरे। निमित्ता-न्यपि तदनुगुणान्येव सहकारीणि भवन्ति ॥ २ ॥

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्या-स्यामि वसापराणि द्वात्रिंशतं वर्षाणीति स हापराणि द्वात्रिं-शतं वर्षाण्युवास तस्मै होवाच ॥ ३ ॥ इति नवमः खण्डः ॥**

एवमेवैष मघवन्सम्यक्त्वयाऽवगतं, न च्छायात्मा, इत्युवाच प्रजापतिः। यो मयोक्त आत्मा प्रकृत एतमेवात्मानं तु ते भूयः पूर्वं व्याख्यातमप्यनुव्याख्या-स्यामि। यस्मात्सकृद्व्याख्यातं दोषरहितानामवधारणविषयं प्राप्तमपि नाग्रहीः, अतः केनचिद्दोषेण प्रतिबद्धग्रहणसामर्थ्यस्त्वम्। अतस्तत्क्षपणाय वसापराणि द्वात्रिंशतं वर्षाणीत्युक्त्वा तथोषितवते क्षपितदोषाय तस्मै होवाच ॥ ३ ॥ इति नवमः खण्डः ॥

**य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचतदमृत-मभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवाने-तद्भयं ददर्श तद्यद्यपीदं शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवेषोऽस्य दोषेण दुष्यति ॥ १ ॥**

य आत्मापहतपाप्मादिलक्षणो 'य एषोऽक्षिणि' इत्यादिना व्याख्यात एष सः। कोऽसौ ? यः स्वप्ने महीयमानः स्त्र्यादिभिः पूज्यमानश्चरति अनेकविधान्स्वप्नभोगाननुभवतीत्यर्थः। एष आत्मेति होवाचेत्यादि समानम्। स हैव-मुक्त इन्द्रः शान्तहृदयः प्रवव्राज। स हाप्राप्यैव देवान्पूर्ववदस्मिन्नप्यात्मनि भयं ददर्श। कथम्। तदिदं शरीरं यद्यप्यन्धं भवति, स्वप्नात्मा योऽनन्धः स भवति। यदि स्राममिदं शरीरमस्रामश्च स भवति। नैवैष स्वप्नात्मास्य देहस्य दोषेण दुष्यति ॥ १ ॥

**न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति ॥ २ ॥ स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥३॥ न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणीति स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच ॥ ४ ॥ इति दशमः खण्डः ॥**

नाप्यस्य वधेन स हन्यते छायात्मवन्न चास्य स्राम्येण स्रामः स्वप्नात्मा भवति। यदध्यायादौ आगममात्रेणोपन्यस्तं 'नास्य जरयैतज्जीर्यति' इत्यादि तदिह न्यायेनोपपादयितुमुपन्यस्तम्। न तावदयं छायात्मवद्देहदोषयुक्तः किन्तु घ्नन्ति त्वेवैनम् एवशब्द इवार्थे। घ्नन्तीवैनं केचनेति द्रष्टव्यम्। न तु घ्नन्त्येवेति। उत्तरेषु सर्वेष्विवशब्ददर्शनात्। नास्य वधेन हन्यत इति विशेषणात् घ्नन्ति त्वेवेति चेत्। नैवम्। प्रजापतिं प्रमाणीकुर्वतोऽनृतवादित्वापादनानुपपत्तेः। 'एतदमृतं' इत्येतत्प्रजापतिवचनं कथं मृषा कुर्यादिन्द्रस्तं प्रमाणीकुर्वन्। ननु च्छायापुरुषे प्रजापतिनोक्ते 'अस्य शरीरस्य नाशमन्वेष नश्यति' इति दोषमभ्यधात्तथेहापि स्यात्। नैवम्। कस्मात् ? 'य एषोऽक्षिणि पुरुषो दृश्यते' इति न

च्छायात्मा प्रजापतिनोक्त इति मन्यते मघवान्। कथम्। अपहतपाप्मादिलक्षणे पृष्टे यदि च्छायात्मा प्रजापतिनोक्त इति मन्यते, तदा कथं प्रजापतिं प्रमाणीकृत्य पुनः श्रवणाय समित्पाणिर्गच्छेत्? जगाम च। तस्मान्न च्छायात्मा प्रजापतिनोक्त इति मन्यते। तथाच व्याख्यातं द्रष्टाक्षिणि दृश्यत इति। तथा विच्छादयन्तीव विद्रावयन्तीव, तथाच पुत्रादिमरणनिमित्तमप्रियवेत्तेव भवति। अपि च स्वयमपि रोदितीव। नन्वप्रियं वेत्त्येव, कथं वेत्तेवेति। उच्यते—नामृताभयत्ववचनानुपपत्तेः। 'ध्यायतीव' इति च श्रुत्यन्तरात्। ननु प्रत्यक्षविरोध इति चेन्न, शरीरात्मत्वप्रत्यक्षवद्भ्रान्तिसम्भवात्। तिष्ठतु तावदप्रियवेत्तेव न वेति। नाहमत्र भोग्यं पश्यामि। स्वप्नात्मज्ञानेऽपीष्टं फलं नोपलभे इत्यभिप्रायः। एवमेवैष तवाभिप्रायेणेति वाक्यशेषः। आत्मनोऽमृताभयगुणवत्त्वस्य अभिप्रेतत्वात्। द्विरुक्तमपि न्यायतो मया यथावन्नावधारयति। तस्मात्पूर्ववदस्याद्यापि प्रतिबन्धकारणमस्तीति मन्वानस्तत्क्षपणाय वसापराणि द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमित्यादिदेश प्रजापतिः। तथोषितवते क्षपितकल्मषायाह ॥२–३–४॥ इति दशमः खण्डः ॥

**तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥ स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच नाह खल्वयं भगव एवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति॥२॥**

पूर्ववदेतं त्वेव त इत्याद्युक्त्वा तद्यत्रैतत्सुप्त इत्यादि व्याख्यातं वाक्यम्। अक्षिणि यो द्रष्टा स्वप्ने च महीयमानश्चरति स एष सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति स्वाभिप्रेतमेव। मघवांस्तत्रापि दोषं ददर्श। कथम्। नाह नैव सुषुप्तस्थोऽयात्मा खल्वयं सम्प्रति

सम्यग्दर्शी च आत्मानं जानाति नैवं जानाति । कथम् । अयमहमस्मीति नो एवेमानि भूतानि चेति । यथा जाग्रति स्वप्ने वा । अतो विनाशमेव विनाशमिवेति पूर्ववत् द्रष्टव्यम्। अपीतोऽपिगतो भवति, विनष्ट इव भवतीत्यभिप्रायः। ज्ञाने हि सति ज्ञातुः सद्भावोऽवगम्यते नासति ज्ञाने। न च सुषुप्तस्य ज्ञानं दृश्यतेऽतो विनष्ट इवेत्यभिप्रायः । न तु विनाशमेवात्मनो मन्यतेऽमृताभयवचनस्य प्रामाण्यमिच्छन् ॥ १-२ ॥

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्वसापराणि पञ्च वर्षाणीति स हापराणि पञ्च वर्षाण्युवास तान्येकशतं सम्पेदुरेतत्तद्यदाहुरेकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच ॥ ३ ॥ इति एकादशः खण्डः ॥**

पूर्ववदेवमेवेत्युक्त्वा आह—यो मयोक्तस्त्रिभिः पर्यायैस्तमेवैतं नो एवान्यत्रैतस्मादात्मनोऽन्यं कञ्चन, किं तर्ह्येतमेव व्याख्यास्यामि । स्वल्पस्तु दोषस्तवावशिष्टः तत्क्षपणाय वसापराण्यन्यानि पञ्च वर्षाणीत्युक्तः स तथा चकार । तस्मै मृदितकषायादिदोषाय स्थानत्रयदोषसम्बन्धरहितमात्मनः स्वरूपं अपहतपाप्मत्वादिलक्षणं मघवते तस्मै होवाच । तान्येकशतं वर्षाणि सम्पेदुः सम्पन्नानि बभूवुः । यत्तदाहुर्लोके शिष्टा—एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवासेति । तदेतद्द्वात्रिंशतमित्यादिना दर्शितमित्याख्यायिकातोऽयमस्य श्रेयो-च्यते । एवं किलैतदिन्द्रत्वादपि गुरुतरमिन्द्रेणापि महता यत्नेनैकोत्तरवर्षशतकृतायासेन प्राप्तमात्मज्ञानम् । अतो नातः परं पुरुषार्थान्तरमस्तीत्यात्मज्ञानं स्तौति ॥ ३ ॥ इति एकादशः खण्डः ॥

**मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥**

मघवन्मर्त्यं वै मरणधर्मीदं शरीरम् । यन्मन्यसेऽक्ष्याधारादिलक्षणः सम्प्रसादलक्षण आत्मा मयोक्तो विनाशमेवापीतो भवतीति, शृणु तत्र कारणम्— यदिदं शरीरं वै यत्पश्यसि तदेतन्मर्त्यं विनाशि। तच्चात्तं मृत्युना ग्रस्तं सततमेव। कदाचिदेव म्रियत इति मर्त्यमित्युक्ते न तथा सन्त्रासो भवति यथा ग्रस्तमेव सदा व्याप्तमेव मृत्युनेत्युक्ते, इति वैराग्यार्थं विशेष इत्युच्यते आत्तं मृत्युनेति। कथं नाम देहाभिमनतो विरक्तः सन्निवर्तेत इति। शरीरमित्यत्र सहेन्द्रियमनोभिरुच्यते। तच्छरीरमस्य सम्प्रसादस्य त्रिस्थानतया गम्यमानस्यामृतस्य मरणादिदेहेन्द्रियमनोधर्मवर्जितस्येत्येतत्, अमृतस्य इत्यनेनैवाशरीरत्वे सिद्धे पुनरशरीरस्य इति वचनं वाय्वादिवत्सावयवत्वमूर्तिमत्त्वे मा भूतामिति, आत्मनो भोगाधिष्ठानम्। आत्मनो वा सत ईक्षितुस्तेजोबन्नादिक्रमेणोत्पन्नमधिष्ठानम्। जीवरूपेण प्रविश्य सदेवाधितिष्ठत्यस्मिन्निति वा अधिष्ठानम्। यस्येदमीदृशं नित्यमेव मृत्युग्रस्तं धर्माधर्मजनितत्वात्प्रियाप्रियवदधिष्ठानं तदधिष्ठितस्तद्वान्सशरीरो भवति। अशरीरस्वभावस्यात्मनः तदेवाहं शरीरं शरीरमेव चाहमित्यविवेकात्मभावः सशरीरत्वं, अत एव सशरीरः सन्नात्तो ग्रस्तः प्रियाप्रियाभ्याम्। प्रसिद्धमेतत्। तस्य च न वै सशरीरस्य सतः प्रियाप्रिययोः बाह्यविषयसंयोगवियोगनिमित्तयोः बाह्यविषयसंयोगवियोगौ ममेति मन्यमानस्यापहतिर्विनाश उच्छेदः सन्ततिरूपयोर्नास्तीति। तं पुनर्देहाभिमानात् अशरीरस्वरूपविज्ञानेन निवर्तितविवेकः ज्ञानमशरीरं सन्तं प्रियाप्रिये न स्पृशतः। स्पृशिः प्रत्येकं सम्बध्यत इति प्रियं न स्पृशत्यप्रियं न स्पृशतीति वाक्यद्वयं भवति। न म्लेच्छाशुच्यधार्मिकैः सह सम्भाषेतेति यद्वत्। धर्माधर्मकार्ये हि ते, अशरीरता तु स्वरूपमिति तत्र धर्माधर्मयोरसम्भवात्तत्कार्यभावो दूरत एवेत्यतो न प्रियाप्रिये स्पृशतः।

ननु यदि प्रियमप्यशरीरं न स्पृशतीति, यन्मघवतोक्तं सुषुप्तस्थो विनाशमेवापीतो भवतीति, तदवेहाप्यापन्नम्। नैष दोषः। धर्माधर्मकार्ययोः शरीरसम्बन्धिनोः प्रियाप्रिययोः प्रतिषेधस्य विवक्षितत्वात् अशरीरं न प्रियाप्रिये स्पृशत इति। आगमापायिनोर्हि स्पर्शशब्दो दृष्टो, यथा शीतस्पर्श उष्णस्पर्श इति न त्वग्नेरुष्णप्रकाशयोः स्वभावभूतयोरग्निना स्पर्श इति भवति। तथाग्नेः तुर्वा उष्णप्रकाशवत्स्वरूपभूतस्यानन्दस्य प्रियस्यापि नेह प्रतिषेधः ‘विज्ञान-

मानन्दं ब्रह्म' 'आनन्दो ब्रह्म' इत्यादिश्रुतिभ्यः। इहापि भूमैव सुखमित्युक्तत्वात्।

ननु भूम्नः प्रियमप्येकत्वेऽसंवेद्यत्वात्स्वरूपेणैव वा नित्यमसंवेद्यत्वान्निर्विशेषतेति नेन्द्रस्य तदिष्टम्। 'नाह खल्वयं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि' इत्युक्तत्वात्। तदीन्द्रस्येष्टं यद्भूतानि चात्मानं च जानाति, न चाप्रियं किञ्चिद्वेत्ति, स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्येन ज्ञानेन। सत्यमेतदिष्टमिन्द्रस्य इमानि भूतानि मत्तोऽन्यानि लोकाः कामाश्च सर्वे मत्तोऽन्येऽहमेषां स्वामीति। न त्वेतदिन्द्रस्य हितम्। हितं चेन्द्रस्य प्रजापतिना वक्तव्यम्। व्योमवदशरीरात्मतया सर्वभूतलोककामात्मत्वोपगमेन या प्राप्तिस्तद्धितमिन्द्राय वक्तव्यमिति प्रजापतिनाभिप्रेतम्। न तु राज्ञो राज्यमिव दन्यत्वेन। तत्रैवं सति कं केन विजानीयादात्मैकत्वे इमानि भूतान्ययमहमस्मीति। नन्वात्मत्वपक्षे 'स्त्रीभिर्वा यानैर्वा' 'स यदि पितृलोककामः' 'स एकधा भवति' इत्याद्यैश्वर्यश्रुतयोऽनुपपन्नाः। न। सर्वात्मनः सर्वफलसम्बन्धोपपत्तेरविरोधात्। मृद इव सर्वघटकरककुण्डाद्यात्मिः। ननु सर्वात्मत्वे दुःखसम्बन्धोऽपि स्यादिति चेन्न, दुःखस्याप्यात्मत्वोपगमादविरोधः। आत्मन्यविद्याकल्पनानिमित्तानि दुःखानि रज्ज्वामिव सर्पादिकल्पनानिमित्तानि। सा चाविद्या अशरीरात्मैकत्वस्वरूपदर्शनेन दुःखनिमित्तोच्छिन्नेति दुःखसम्बन्धाशङ्का न सम्भवति। शुद्धसत्त्वसङ्कल्पनिमित्तानां तु कामानामीश्वरदेहसम्बन्धः सर्वभूतेषु मानसानां पर एव सर्वसत्त्वोपाधिद्वारेण भोक्तेति सर्वाविद्याकृतसंव्यवहाराणां पर एवात्मा आस्पदं नान्योऽस्तीति वेदान्तसिद्धान्तः।

'य एषोऽक्षिणि पुरुषो दृश्यते' इति च्छायापुरुष एव प्रजापतिनोक्तः, स्वप्नसुषुप्तयोश्चान्य एव, न परोऽपहतपाप्मत्वादिलक्षणो, विरोधादिति केचिन्मन्यन्ते। च्छायाद्यात्मनां चोपदेशे प्रयोजनमाचक्षते। आदावेवोच्यमाने किल दुर्विज्ञेयत्वात्परस्यात्मनः अत्यन्तबाह्यविषयासक्तचेतसः अत्यन्तसूक्ष्मवस्तुश्रवणे व्यामोहो मा भूदिति। यथा किल द्वितीयायां सूक्ष्मं चन्द्रं दिदर्शयिषुर्वृक्षं कञ्चित्प्रत्यक्षमादौ दर्शयति पश्यामुमेष चन्द्र इति, ततोऽन्यं ततोऽप्यन्यं गिरिमूर्धानं च चन्द्रसमीपस्थमेष चन्द्र इति, ततोऽसौ चन्द्रम्पश्यति, एवमेतत् 'य एषोऽक्षिणि' इत्याद्युक्तं प्रजापतिना त्रिभिः पर्यायैर्न पर इति। चतुर्थे तु पर्याये

देहान्मर्त्यात्समुत्थायाशरीरतामापन्नो ज्योतिःस्वरूपम् । यस्मिन्नुत्तमपुरुषे स्त्र्यादिभिर्जक्षत् क्रीडन्रममाणो भवति स उत्तमः पुरुषः पर उक्त इति चाहुः।

सत्यं, रमणीया तावदियं व्याख्या श्रोतुम् । नत्वर्थोऽस्य ग्रन्थस्यैवं सम्भवति। कथम्। अक्षिणि पुरुषो दृश्यते इत्युपन्यस्य शिष्याभ्यां छायात्मनि गृहीते तयोस्तद्विपरीतग्रहणं मत्वा तदपनयायोदशरावोपन्यासः किं पश्यथ इति च प्रश्नः साध्वलङ्कारोपदेशश्चानर्थकः स्यात् यदि च्छायात्मैव प्रजापतिनाऽक्षिणि दृश्यत इत्युपदिष्टः । किञ्च यदि स्वयमुपदिष्ट इति ग्रहणस्याप्यपनयकारणं वक्तव्यं स्यात् । स्वप्नसुषुप्तात्मग्रहणयोरपि तदपनयकारणञ्च स्वयं ब्रूयात्। न चोक्तं तेन। तेन मन्यामहे नाक्षिणि च्छायात्मा प्रजापतिनोपदिष्टः। किञ्चान्यदक्षिणि द्रष्टा चेत् दृश्यते इत्युपदिष्टः स्यात्तत इदं युक्तम्। एतं त्वेव ते इत्युक्त्वा स्वप्नेऽपि द्रष्टुरेवोपदेशः। स्वप्ने न द्रष्टोपदिष्टः इति चेन्न, 'अपि रोदितीव' 'अप्रियवेत्तेव' इत्युपदेशात् । न च द्रष्टुरन्यः कश्चित्स्वप्ने महीयमानश्चरति 'अत्रायं पुरुषः स्वयञ्ज्योतिः' इति न्यायतः श्रुत्यन्तरे सिद्धत्वात् यद्यपि स्वप्ने सधीः भवति तथापि न धीः स्वप्नभोगोपलब्धिं प्रति करणत्वं भजते। किं तर्हि, पटचित्रवज्जाग्रद्वासनाश्रया दृश्यैव धीर्भवतीति न द्रष्टुः स्वयञ्ज्योतिष्ट्वबाधः स्यात्। किञ्चान्यत्। जाग्रत्स्वप्नयोर्भूतानि चात्मानं च जानाति इमानि भूतान्ययमहमस्मीति। प्राप्तौ सत्यां प्रतिषेधो युक्तः स्यान्नाह खल्वयमित्यादि। तथा चेतनस्यैवाविद्यानिमित्तयोः सशरीरत्वे सति प्रियाप्रिययोरपहतिर्नास्तीत्युक्त्वा तस्यैवाशरीरस्य सतो विद्यायां सत्यां सशरीरत्वे प्राप्तयोः प्रतिषेधो युक्तो 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति। एकश्चात्मा स्वप्नबुद्धान्तयोर्महामत्स्यवदसङ्गः सञ्चरतीति श्रुत्यन्तरे सिद्धम् ।

यच्चोक्तं सम्प्रसादः शरीरात्समुत्थाय यस्मिन्स्त्र्यादिभी रममाणो भवति सोऽन्यः सम्प्रसादादधिकरणनिर्दिष्ट उत्तमः पुरुष इति। तदप्यसत्। चतुर्थेऽपि पर्याय 'एतं त्वेव ते' इति वचनात्। यदि ततोऽन्योऽभिप्रेतः स्यात्पूर्ववत् 'एतं त्वेव ते' इति न ब्रूयान्मृषा प्रजापतिः। किञ्चान्यत्तेजोबन्नादीनां स्रष्टुः सतः स्वविकारदेहशुङ्गे प्रवेशं दर्शयित्वा प्रविष्टाय पुनः तत्त्वमसीत्युपदेशो मृषा

प्रसज्येत । तस्मिंश्च स्त्र्यादिभी रन्ता भविष्यतीति युक्त उपदेशोऽभविष्यद्यदि सम्प्रसादादन्य उत्तमः पुरुषो भवेत् । तथा भूम्नि अहमेव इत्यादिश्य 'आत्मैवेदं सर्वं' इति नोपसमहरिष्यद्यदि भूमा जीवादन्योऽभविष्यत् । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुत्यन्तराच्च । सर्वश्रुतिषु च परस्मिन्नात्मशब्दप्रयोगो नाभविष्यत्प्रत्यगात्मा चेत्सर्वजन्तूनां पर आत्मा न भवेत् । तस्मादेक एवात्मा प्रकरणी सिद्धः ।

न चात्मनः संसारित्वम् । अविद्याध्यस्तत्वादात्मनि संसारस्य । न हि रज्जुशुक्तिकागगनादिषु सर्परजतमलादीनि मिथ्याज्ञानाध्यस्तानि तेषां भवन्तीति । एतेन सशरीरस्य प्रियाप्रिययोरपहतिर्नास्तीति व्याख्यातम् । यच्च स्थितसप्रियत्वे-स्तैवेति सिद्धम् । एवं च सति सर्वपर्यायेषु 'एतदमृतमभयमेतद्ब्रह्म' इति प्रजापतेर्वचनम् । यदि वा प्रजापतिच्छद्मरूपायाः श्रुतेर्वचनं, सत्यमेव भवेत् । न च तत्कुतर्कबुद्ध्या मृषा कर्तुं युक्तम् । ततो गुरुतरस्य प्रमाणान्तरस्यानुपपत्तेः । ननु प्रत्यक्षं दुःखाद्यप्रियवेत्तृत्वमव्यभिचार्यनुभूयत इति चेन्न, जरादिरहितो जीर्णोऽहं जातोऽस्म्यायुष्मान्गौरः कृष्णो मृत इत्यादिप्रत्यक्षानुभववदनुपपत्तेः । सर्वमप्येतत्सत्यमिति चेदस्त्वेवैतदेवं दुरवगमं येन देवराजोऽपि उदशरावादिदर्शिताविनाशयुक्तिरपि मुमोहैवात्र 'विनाशमेवापीतो भवति' इति । तथा विरोचनो महाप्राज्ञः प्राजापत्योऽपि देहमात्रात्मदर्शनो बभूव । तथा इन्द्रस्य आत्मविनाशभयसागर एव वैनाशिका न्यमज्जन् । तथा सांख्या द्रष्टारं देहादिव्यतिरिक्तमवगम्यापि त्यक्तागमप्रमाणत्वादनृतविषय एवानुमानदर्शने तस्थुः । तथान्ये काणादादिदर्शनाः कषायरक्तमिव क्षारादिभिर्वस्त्रं नवभिरात्मगुणैर्युक्तमात्मद्रव्यं विशोधयितुं प्रवृत्ताः । तथान्ये कर्मिणो बाह्यविषयापहृतचेतसो वेदप्रमाणा अपि परमार्थसत्यमात्मैकत्वं विनाशमिव इन्द्रवन्मन्यमाना घटीयन्त्रवदारोहावरोहप्रकारैः अनिशं बम्भ्रमन्ति । किमन्ये क्षुद्रजन्तवो विवेकहीनाः स्वभावत एव बहिर्विषयापहृतचेतसः । तस्मादिदं त्यक्तसर्वबाह्यैषणैरनन्यशरणैः परमहंसपरिव्राजकैः अत्याश्रमिभिर्वेदान्तविज्ञानपरैरेव वेदनीयं पूज्यतमैः प्राजापत्यं चेमं सम्प्रदायमनुसरद्भिरुपनिबद्धं प्रकरणचतुष्टयेन । तथानुशासन्त्यद्यापि 'त एव नान्ये' इति ॥ १ ॥

**अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथै-तान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपे-णाभिनिष्पद्यन्ते ॥ २ ॥**

तत्राशरीरस्य सम्प्रसादस्य अविद्यया शरीरेणाविशेषतां सशरीरतामेव सम्प्राप्तस्य शरीरात्समुत्थाय स्वेन रूपेण यथाभिनिष्पत्तिस्तथा वक्तव्येति दृष्टान्त उच्यते—अशरीरो वायुरविद्यमानं शिरःपाण्यादिमच्छरीरमस्येत्यशरीरः । किं चाभ्रं विद्युत्स्तनयित्नुरित्येतानि चाशरीराणि । तत्तैवं सति वर्षादिप्रयोजनावसाने यथा । अमुष्मादिति भूमिष्ठा श्रुतिः द्युलोकसम्बन्धिनमाकाशदेशं व्यपदिशति । एतानि यथोक्तान्याकाशसमानरूपतामापन्नानि स्वेन वाय्वादिरूपेण अगृह्यमाणान्याकाशाख्यतां गतानि, यथा सम्प्रसादोऽविद्यावस्थायां शरीरात्मभावमेवापन्नः, तानि च तथाभूतान्यमुष्मात् द्युलोकसम्बन्धिनः आकाशदेशात्समुत्तिष्ठन्ति वर्षणादिप्रयोजनाभिनिर्वृत्तये कथम् । शिशिरापाये सावित्रं परं ज्योतिः प्रकृष्टं ग्रैष्मकमुपसम्पद्य सावित्रमभितापं प्राप्येत्यर्थः । आदित्याभितापनपृथग्भावमापादिताः सन्तः स्वेन स्वेन रूपेण पुरोवातादिवायुरूपेण स्तिमितभावं हित्वाऽभ्रमपि भूमिपर्वतहस्त्यादिरूपेण विद्युदपि स्वेन ज्योतिर्लतादिचञ्चलरूपेण स्तनयित्नुरपि स्वेन गर्जिताशनिरूपेणेत्येवं प्रावृडागमे स्वेन स्वेन रूपेणाभिनिष्पद्यन्ते ॥ २ ॥

**एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुषः स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥ ३ ॥**

यथायं दृष्टान्तो वाय्वादीनां आकाशादिसाम्यगमनवत् अविद्यया संसारावस्थायां शरीरसाम्यमापन्नोऽहममुष्य पुत्रो जातो जीर्णो मरिष्ये इत्येवम्प्रकारं प्रजापतिनेव मघवान्यथोक्तेन क्रमेण नासि त्वं देहेन्द्रियादिधर्मा, तत्त्वमसीति प्रतिबोधितः सन्स एष सम्प्रसादो जीवोऽस्माच्छरीरादाकाशादिव वाय्वादयः

समुत्थाय देहादिविलक्षणं आत्मनो रूपमवगम्य, देहात्मभावनां हित्वेत्येतत् । स्वेन रूपेण सदात्मनैवाभिनिष्पद्यत इति व्याख्यातं पुरस्तात् । स येन स्वेन रूपेण सम्प्रसादोऽभिनिष्पद्यते प्राक्प्रतिबोधात् तद्भ्रान्तिनिमित्तात्सर्पो भवति यथा रज्जुः, पश्चात्कृतप्रकाशा रज्ज्वात्मना स्वेन रूपेणाभिनिष्पद्यते । एवं च स उत्तमपुरुष उत्तमश्चासौ पुरुषश्चेत्युत्तमपुरुषः स एवोत्तमपुरुषः । अक्षिस्वप्नपुरुषौ व्यक्तावव्यक्तश्च सुषुप्तः समस्तः सम्प्रसन्नोऽशरीरश्च स्वेन रूपेणेति । एषामेव स्वेन रूपेणावस्थितः क्षराक्षरौ व्याकृताव्याकृतौ अपेक्ष्योत्तमपुरुषः कृतनिर्वचनो ह्ययं गीतासु । स सम्प्रसादः स्वेन रूपेण तत्र स्वात्मनि स्वस्थतया सर्वात्मभूतः पर्येति क्वचिदिन्द्राद्यात्मना जक्षद्धसन्भक्षयन्वा भक्ष्यानुच्चावचानीप्सितान् क्वचिन्मनोमात्रैः सङ्कल्पादेव समुत्थितैर्वा लौकिकैर्वा क्रीडन्स्त्र्यादिभी रममाणश्च मनसैव, नोपजनं, स्त्रीपुंसयोरन्योन्योपगमेन जायत इत्युपजनं, आत्मभावेन वात्मसामीप्येन जायत इत्युपजनं, इदं शरीरं, तन्न स्मरन् । तत्स्मरणे हि दुःखमेव स्यात् । दुःखात्मकत्वात्तस्य ।

नन्वनुभूतं चेन्न स्मरेदसर्वज्ञत्वं मुक्तस्य । नैष दोषः । येन मिथ्याज्ञानादिना जनितं तच्च मिथ्याज्ञानादि विद्ययोच्छेदितं, अतस्तन्नानुभूतमेवेति न तदस्मरणे सर्वज्ञत्वहानिः । न ह्युन्मत्तेन ग्रहगृहीतेन वा यदनुभूतं तदुन्मादाद्यपगमेऽपि स्मर्तव्यं स्यात् । तथेहापि संसारिभिरविद्यादोषवद्भिर्यदनुभूयते तत्सर्वात्मानमशरीरं न स्पृशति । अविद्यानिमित्ताभावात् । ये तु च्छिन्नदोषैर्मृदितकषायैः मानसाः सत्याः कामाः अनृतापिधाना अनुभूयन्ते विद्याभिव्यङ्ग्यत्वात्त एव मुक्तेन सर्वात्मभूतेन सम्बध्यन्त इत्यात्मज्ञानस्तुतये निर्दिश्यन्ते । अतः साध्वेतद्विशिनष्टि—य एते ब्रह्मलोक इति । यत्र क्वचन भवन्तोऽपि ब्रह्मण्येव हि ते लोके भवन्तीति सर्वात्मत्वाद्ब्रह्मण उच्यन्ते ।

ननु कथमेकः सन्नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा कामांश्च स्त्र्यादिलौकिकान्पश्यन् रमत इति च विरुद्धम् । यथैको यस्मिन्नेव क्षणे पश्यति तस्मिन्नेव क्षणे न पश्यति चेत । नैष दोषः । श्रुत्यन्तरे परिहृतत्वात् । द्रष्टुर्दृष्टेर्विपरिलोपाभावात्सर्वदैव भवति । द्रष्टुरन्यत्वेन कामानामभावान्न पश्यति

चेति । यद्यपि सुषुप्ते तदुक्तं मुक्तस्यापि सर्वैकत्वात्समानो द्वितीयाभावः। 'केन कं पश्येत्' इति चोक्तमेव । अशरीरस्वरूपोऽपहतपाप्मादिलक्षणः सन्कथमेष पुरुषोऽक्षिणि दृश्यत इत्युक्तः प्रजापतिना ? तत्र यथाऽसावक्षिणि साक्षात् दृश्यते तद्वक्तव्यमिति इदमारभ्यते । तत्र को हेतुरक्षिणि दर्शन इत्याह—सदृष्टान्तो यथा प्रयोग्यः प्रयोग्यपरो वा स-शब्दः । प्रयुज्यत इति प्रयोग्योऽश्वो बलीवर्दो वा यथा लोक आचरत्यनेनेत्याचरणो रथोऽनो वा तस्मिन्नाचरणे युक्तस्तदाकर्षणाय, एवमस्मिञ्छरीरे रथस्थानीये प्राणः पञ्चवृत्तिरिन्द्रियमनोबुद्धिसंयुक्तः प्रज्ञात्मा विज्ञानक्रियाशक्तिद्वयसम्मूर्छितात्मा युक्तः स्वकर्मफलोपभोगनिमित्तं नियुक्तः । 'कस्मिन्नु अहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति ईश्वरेण राज्ञेव सर्वाधिकारी दर्शनश्रवणचेष्टाव्यापारेऽधिकृतः । तस्यैव तु मात्रा एकदेशश्चक्षुरिन्द्रियं रूपोपलब्धिद्वारभूतम् ॥ ३ ॥

**अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माभिव्याहाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥**

अथ यत्र कृष्णतारोपलक्षितमाकाशं देहच्छिद्रं अनुविषण्णमनुषक्तमनुगतं, तत्र स प्रकृतोऽशरीर आत्मा चाक्षुषश्चक्षुषि भव इति चाक्षुषः, तस्य दर्शनाय रूपोपलब्धये चक्षुः करणं, यस्य तद्देहादिभिः संहतत्वात्परस्य द्रष्टुरर्थे, सोऽत्र चक्षुषि दर्शनेन लिङ्गेन दृश्यते परोऽशरीरोऽसंहतः । 'अक्षिणि दृश्यत' इति प्रजापतिनोक्तं सर्वेन्द्रियद्वारोपलक्षणार्थम् । सर्वविषयोपलब्धा हि स एवेति स्फुटोपलब्धिहेतुत्वात्तु अक्षिणीति विशेषवचनं सर्वश्रुतिषु । 'अहमदर्शमिति तत्सत्यं भवति' इति च श्रुतेः । अथापि योऽस्मिन्देहे वेद । कथं ? इदं सुगन्धि दुर्गन्धि वा जिघ्राणात्यस्य गन्धं विजानीयामिति, स आत्मा, तस्य गन्धाय गन्धविज्ञानाय घ्राणम् । अथ यो वेदेदं वचनमभिव्याहराणीति वदिष्यामीति, स आत्मा अभिव्याहरणक्रियासिद्धये करणं वागिन्द्रियम् । अथ यो वेदेदं शृणवानीति स आत्मा, श्रवणाय श्रोत्रम् ॥ ४ ॥

**अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके ॥ ५ ॥**

अथ यो वेदेदं मन्वानीति मननव्यापारमिन्द्रियासंस्पृष्टं केवलं मन्वानीति वेद, स आत्मा, मननाय मनः। यो वेद स आत्मेत्येवं सर्वत्र प्रयोगाद्वेदनमस्य स्वरूपमित्यवगम्यते। यथा यः पुरस्तात्प्रकाशयति स आदित्यो, यो दक्षिणतो यः पश्चाद्य उत्तरतो य ऊर्ध्वं प्रकाशयति स आदित्य इत्युक्ते प्रकाशस्वरूपः इति गम्यते। दर्शनादिक्रियानिर्वृत्त्यर्थानि तु चक्षुरादिकरणानि। इदं चास्यात्मनः सामर्थ्यादवगम्यते। आत्मनः सत्तामात्र एव ज्ञानकर्तृत्वं, न तु व्यापृततया। यथा सवितुः सत्तामात्र एव प्रकाशनकर्तृत्वं, न तु व्यापृततयेति तद्वत्। मनोऽस्य आत्मनो दैवमप्राकृतमितरेन्द्रियसाधारणं चक्षुश्चष्टे पश्यत्यनेनेति चक्षुः। वर्तमानकालविषयाणि चेन्द्रियाण्यतोऽदैवानि तानि। मनस्तु त्रिकालविषयोपलब्धिकरणं स्मृतिहेतुश्च सूक्ष्मव्यवहितादिसर्वोपलब्धिकरणं चेति दैवं चक्षुरुच्यते। स वै मुक्तः स्वरूपापन्नोऽविद्याकृतदेहेन्द्रियमनोवियुक्तः सर्वात्मभावमापन्नः सन्नेव व्योमवद्विशुद्धः सर्वेश्वरो मनउपाधिः सन्नेतेनैश्वरेण मनसा एतान्कामान् सवितृप्रकाशवन्नित्यप्रवृत्तेन दर्शनेन पश्यन्रमते। काङ्कामानिति विशिनष्टि— य एते ब्रह्मणि लोके हिरण्यगर्भस्थितेन बाह्यविषयासङ्गानृतेनापिहिताः सङ्कल्पमात्रलभ्याः तानित्यर्थः ॥ ५ ॥

**तं वा एतं देवा आत्मानमुपासते तस्मात्तेषां सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥ इति द्वादशः खण्डः ॥**

यस्मादेष इन्द्राय प्रजापतिनोक्त आत्मा, तस्मात्ततः श्रुत्वा तमात्मानमद्यत्वेऽपि देवा उपासते। तदुपासनाच्च तेषां सर्वे च लोका आत्ताः प्राप्ताः सर्वे च कामाः। यदर्थं हीन्द्र एकशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमुवास तत्फलं प्राप्तं देवैरित्यभिप्रायः। तद्युक्तं देवानां महाभाग्यत्वात्, न त्विदानीं मनुष्याणाम-

ल्पजीवितत्वामन्दतरप्रज्ञत्वाच्च सम्भवतीति प्राप्ते इदमुच्यते— स सर्वांश्च लोकानाप्नोति सर्वांश्च कामानिदानीन्तनोऽपि । कोऽसौ । इन्द्रादिवत् यस्तमात्मानमनुविद्य विजानातीति ह सामान्येन किल प्रजापतिरुवाच । अतः सर्वेषामात्मज्ञानं तत्फलप्राप्तिश्च तुल्यैव भवतीत्यर्थः । द्विर्वचनं प्रकरणसमाप्त्यर्थम् ॥६॥ इति द्वादशः खण्डः ॥

**श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यभिसम्भवामीति ॥ १ ॥ इति त्रयोदशः खण्डः ॥**

श्यामाच्छबलं प्रपद्य इत्यादिमन्त्राम्नायः पावनो जपार्थश्च ध्यानार्थो वा। श्यामो गम्भीरो वर्णः श्याम इव श्यामो हार्दं ब्रह्म अत्यन्तदुरवगाह्यत्वात् तद्धार्दं ब्रह्म ज्ञात्वा ध्यानेन तस्माच्छयामाच्छबलं शबल इव शबलः अरण्याद्यनेककाममिश्रत्वाद्ब्रह्मलोकस्य शाबल्यं तं ब्रह्मलोकं शबलं प्रपद्ये मनसा शरीरपाताद्वोर्ध्वं गच्छेयम् । यस्मादहं शबलाद्ब्रह्मलोकात् नामरूपव्याकरणाय श्यामं प्रपद्ये हार्दभावं प्रपन्नोऽस्मीत्यभिप्रायः । अतस्तमेव प्रकृतिस्वरूपमात्मानं शबलं प्रपद्य इत्यर्थः । कथं शबलं ब्रह्मलोकं प्रपद्य इत्युच्यते— अश्व इव स्वानि लोमानि विधूय कम्पनेन श्रमं पांस्वादि च रोमतोऽपनीय यथा निर्मलो भवति, एवं हार्दब्रह्मज्ञानेन विधूय पापं धर्माधर्माख्यं चन्द्र इव च राहुग्रस्तः, तस्माद्राहोर्मुखात्प्रमुच्य भास्वरो भवति यथा, एवं धूत्वा प्रहाय शरीरं सर्वानर्थाश्रयं इहैव ध्यानेन कृतात्मा कृतकृत्यः सन्नकृतं नित्यं ब्रह्मलोकमभिसम्भवामीति । द्विर्वचनं मन्त्रसमाप्त्यर्थम् ॥ १ ॥ इति त्रयोदशः खण्डः ॥

**आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्येतमदत्कमदत्कं श्येतं लिन्दु माभिगां लिन्दु माभिगाम् ॥ १ ॥ इति चतुर्दशः खण्डः ॥**

आकाशो वा इत्यादि ब्रह्मणो लक्षणनिर्देशार्थमाख्यानाय । आकाशो वै

नाम श्रुतिषु प्रसिद्ध आत्मा । आकाश इवाशरीरत्वात्सूक्ष्मत्वाच्च । स चाकाशो नामरूपयोः स्वात्मस्थयोर्जगद्बीजभूतयोः सलिलस्येव फेनस्थानीययोः निर्वहिता निर्वोढा व्याकर्ता । ते नामरूपे यदन्तरा यस्य ब्रह्मणोऽन्तरा मध्ये वर्तेते, तयोर्वा नामरूपयोरन्तरा मध्ये यन्नामरूपाभ्यामस्पृष्टं यदित्येतत् तत् ब्रह्म नामरूपविलक्षणं नामरूपाभ्यामस्पृष्टं तथापि तयोर्निर्वोढृ एवंलक्षणं ब्रह्मेत्यर्थः । इदमेव मैत्रेयीब्राह्मणेनोक्तम् । चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैवेति गम्यत एकवाक्यता । कथं तदवगम्यत इत्याह— स आत्मा । आत्मा हि नाम सर्वजन्तूनां प्रत्यक्चेतनः स्वसंवेद्यः प्रसिद्धस्तेनैव स्वरूपेणोन्नीय अशरीरो व्योमवत्सर्वगत आत्मा ब्रह्मेत्यवगन्तव्यम् । तच्चात्मा ब्रह्मामृतममरणधर्मा । अत ऊर्ध्वं मन्त्रः । प्रजापतिश्चतुर्मुखस्तस्य सभां वेश्म प्रभुविमितं वेश्म प्रपद्ये गच्छेयम् । किञ्च यशोऽहं यशो नाम आत्माहं भवामि ब्राह्मणानां ब्राह्मणा एव हि विशेषतस्तमुपासते ततस्तेषां यशो भवामि । तथा राज्ञां विशां च । तेऽप्यधिकृता एवेति तेषामप्यात्मा भवामि । तद्यशोऽहमनुप्रापत्सि अनुप्राप्तुमिच्छामि । स हाहं यशसामात्मनां देहेन्द्रियमनोबुद्धिलक्षणानामात्मा । किमर्थमहमेवं प्रपद्य इति, उच्यते— श्येतं वर्णतः पक्वबदरसमं रोहितम् । तथाऽदन्तं दन्तरहितमप्यदत्कं भक्षयितृ स्त्रीव्यञ्जनं तत्सेविनां तेजोबलवीर्यविज्ञानधर्माणामपहन्तृ विनाशयितृ इत्येतत् । यदेवलक्षणं श्येतं लिन्दु पिच्छलं तन्माऽभिगां माभिगच्छेयम् । द्विर्वचनमत्यन्तानर्थहेतुत्वप्रदर्शनार्थम् ॥ १ ॥ इति चतुर्दशः खण्डः ॥

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते ॥१॥ इति पञ्चदशः खण्डः ॥ इति अष्टमोऽध्यायः ॥**

तद्धैतदात्मज्ञानं सोपकरणमोमित्येतदक्षरमित्याद्यैः सहोपासनैस्तद्वाचकेन ग्रन्थेनाष्टाध्यायीलक्षणेन सह ब्रह्मा हिरण्यगर्भः परमेश्वरो वा तद्द्वारेण प्रजापतये

कश्यपायोवाच । असावपि मनवे स्वपुत्राय । मनुः प्रजाभ्यः । इत्येवं श्रुत्यर्थसम्प्रदायपरम्परयागतं उपनिषद्विज्ञानमद्यापि विद्वत्स्ववगम्यते । यथेह षष्ठाद्यध्यायत्रये प्रकाशितात्मविद्या सफलावगम्यते तथा कर्मणां न कश्चनार्थ इति प्राप्ते, तदानर्थक्यप्राप्तिपरिजिहीर्षयेदं कर्मणो विद्वद्भिरनुष्ठीयमानस्य विशिष्टफलवत्त्वेनार्थवत्त्वमुच्यते — आचार्यकुलाद्वेदमधीत्य सहार्थतोऽध्ययनं कृत्वा, यथाविधानं यथास्मृत्युक्तैर्नियमैर्युक्तः सन्नित्यर्थः । सर्वस्यापि विधेः स्मृत्युक्तस्योपकुर्वाणकं प्रति कर्तव्यत्वे गुरुशुश्रूषायाः प्राधान्यप्रदर्शनार्थमाह - गुरोः कर्म यत्कर्तव्यं तत्कृत्वा कर्मशून्यो योऽतिशिष्टः कालस्तेन कालेन वेदमधीत्येत्यर्थः । एवं हि नियमवताधीतो वेदः कर्मज्ञानफलप्राप्तये भवति, नान्यथेत्यभिप्रायः । अभिसमावृत्य धर्मजिज्ञासां समापयित्वा गुरुकुलान्निवृत्त्य न्यायतो दारानाहृत्य कुटुम्बे स्थित्वा गार्हस्थ्ये विहिते कर्मणि तिष्ठन्नित्यर्थः । तत्रापि गार्हस्थ्यविहितानां कर्मणां स्वाध्यायस्य प्राधान्यप्रदर्शनार्थमुच्यते — शुचौ विविक्तेऽमेध्यादिरहिते देशे यथावदासीनः स्वाध्यायमधीयानो नैत्यकमधिकं च यथाशक्ति ऋगाद्यभ्यासं च कुर्वन् धार्मिकान्पुत्राञ्शिष्यांश्च धर्मयुक्तान्विदधत् धार्मिकत्वेन तान्नियमयन्नात्मनि स्वहृदये हार्दे ब्रह्मणि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्योपसंहृत्य इन्द्रियग्रहणात्कर्माणि च सन्न्यस्य अहिंसन्हिंसां परपीडामकुर्वन्सर्वभूतानि स्थावरजङ्गमानि भूतान्यपीडयन्नित्यर्थः । भिक्षानिमित्तमटनादिनापि परपीडा स्यादित्यत आह— अन्यत्र तीर्थेभ्यः । तीर्थं नाम शास्त्रानुज्ञाविषयस्ततोऽन्यत्रेत्यर्थः । सर्वाश्रमिणां चैतत्समानम् । तीर्थेभ्योऽन्यत्र अहिंसैवेत्यन्ये वर्णयन्ति कुटुम्बे एवैतत्सर्वं कुर्वन्स खल्वधिकृतो, यावदायुषं यावज्जीवमेवं यथोक्तेन प्रकारेणैव वर्तयन्ब्रह्मलोकमभिसम्पद्यते देहान्ते । न च पुनरावर्तते शरीरग्रहणाय । पुनरावृत्तेः प्राप्तायाः प्रतिषेधात् । अर्चिरादिना मार्गेण कार्यब्रह्मलोकमभिसम्पद्य यावद्ब्रह्मलोकस्थितिः तावत्तत्रैव तिष्ठति प्राक्ततो नावर्तत इत्यर्थः । द्विरभ्यासः उपनिषद्विद्यापरिसमाप्त्यर्थः ॥ १ ॥ इति पञ्चदशः खण्डः ॥ इति अष्टमोऽध्यायः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीशङ्करभगवतः कृतौ छान्दोग्योपनिषद्भाष्यं समाप्तम् ॥

———

ॐ । आप्यायन्तु ममाङ्गानि वाक्प्राणचक्षुःश्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

**इति सामवेदीया छान्दोग्योपनिषत्समाप्ता ॥**

---

॥ ॐ ॥

श्रीमच्छङ्कराचार्यविरचितभाष्ययुता

# बृहदारण्यकोपनिषत् ।



ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः ॥

---

## ॥ अथ प्रथमोऽध्यायः ॥

"उषा वा अश्वस्य" इत्येवमाद्या वाजसनेयिब्राह्मणोपनिषत् । तस्या (१) इयमल्पग्रन्था वृत्तिरारभ्यते संसारव्याविवृत्सुभ्यः संसारहेतुनिवृत्तिसाधनब्रह्मात्मैकत्वविद्याप्रतिपत्तये । सेयं ब्रह्मविद्या उपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात् । उपनिपूर्वस्य सदेस्तदर्थत्वात् । तादर्थ्यात् ग्रन्थोऽप्युपनिषदुच्यते ।

सेयं षडध्यायी अरण्येऽनूच्यमानत्वादारण्यकम् । बृहत्त्वात्परिमाणतो (२) बृहदारण्यकम् । तस्यास्य कर्मकाण्डेन सम्बन्धोऽभिधीयते । सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यां अनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात् । दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारो-

---

(१) इयमल्पग्रन्थावृत्तिरिति—भर्तृप्रपञ्चभाष्याद्विशेषान्तरमाह— अल्पग्रन्थेति । अस्या ग्रन्थतोऽल्पत्वेपि नार्थतस्तथात्वमितिग्रन्थस्य ग्रहणम् । वृत्तिशब्दो भाष्यविषयः । सूत्रानुकारिभिर्वाक्यैः सूत्रार्थस्य स्वपदानां चोपवर्णनस्य भाष्यलक्षणस्यात्र भावादिति ।

(२) बृहदारण्यकम्—उपनिषदन्तरेभ्यो ग्रन्थपरिमाणातिरेकादस्य बृहत्त्वं प्रसिद्धमर्थतोपि तदस्ति ब्रह्मणोऽखण्डैकरसस्यात्र प्रतिपाद्यत्वात्तज्ज्ञानहेतूनां चान्तरङ्गबहिरङ्गाणां भूयसामिह प्रतिपादनात् अतो बृहत्त्वादारण्यकत्वाच्च बृहदारण्यकम् ।

पायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वान्नागमान्वेषणा। न चासति जन्मान्तरसम्बन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात्। स्वभाववादिदर्शनात्। तस्माज्जन्मान्तरसम्बन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्तते। 'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके' इत्युपक्रम्य 'अस्तीत्येवोपलब्धव्यः' इत्येवमादिनिर्णयदर्शनात्। 'यथा च मरणं प्राप्य' इत्युपक्रम्य 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्॥' इति च। (१)'स्वयंज्योतिः' इत्युपक्रम्य 'तं विद्याकर्मणी समन्वारभेते' 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इति च। 'ज्ञपयिष्यामि' इत्युपक्रम्य 'विज्ञानमयः' इति च व्यतिरिक्तात्मास्तित्वम्। तत्प्रत्यक्षविषयमेवेति चेन्न, वादिविप्रतिपत्तिदर्शनात्। नहि देहान्तरसम्बन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युर्नास्त्यात्मेति वदन्तः। न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते नास्ति घट इति। स्थाण्वादौ पुरुषादिदर्शनान्नेति चेन्न, निरूपितेऽभावात्। न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति। वैनाशिकास्त्वहमिति प्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते। तस्मात्प्रत्यक्षविषयवैलक्षण्यात् प्रत्यक्षात् नात्मास्तित्वसिद्धिः। तथानुमानादपि। श्रुत्या आत्मास्तित्वे लिङ्गस्य दर्शितत्वाल्लिङ्गस्य च प्रत्यक्षविषयत्वादिति चेन्न, जन्मान्तरसम्बन्धस्याग्रहणात्। आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्च अहंप्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवाणीति कल्पयन्तो वदन्ति प्रत्यक्षश्चानुमेयश्चात्मेति।

सर्वथाप्यस्त्यात्मा देहान्तरसम्बन्धीत्येवं प्रतिपन्ने देहान्तरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्मकाण्डमारब्धम्। न त्वात्मनः इष्टानिष्टप्राप्तिपरिहारेच्छाकारणं आत्मविषयमज्ञानं कर्तृभोक्तृस्वरूपाभिमानलक्षणं

(१) स्वयंज्योतिरिति—उपक्रमोपसंहारैकरूप्यात् कठवल्लीनामतिरिक्तात्मास्तित्वे तात्पर्यमुक्त्वा बृहदारण्यकस्यापि तत्र तात्पर्यमाह स्वयमिति।

तद्विपरीतब्रह्मात्मस्वरूपविज्ञानेनापनीतम्। यावद्धि तन्नापनीयते तावदयं कर्मफलरागद्वेषादिस्वाभाविकदोषप्रयुक्तः शास्त्रविहितप्रतिषिद्धातिक्रमेणापि प्रवर्तमानो मनोवाक्कायैर्दृष्टादृष्टानिष्टसाधनानि अधर्मसञ्ज्ञकानि कर्माण्युपचिनोति बाहुल्येन, स्वाभाविकदोषबलीयस्त्वात्। ततः स्थावरान्ताधोगतिः। कदाचिच्छास्त्रकृतसंस्कारबलीयस्त्वम्। ततो मनआदिभिरिष्टसाधनं बाहुल्येनोचोपचिनोति धर्माख्यम्। तत् द्विविधम्—ज्ञानपूर्वकं केवलञ्च। तत्र केवलं पितृलोकादिप्राप्तिफलम्। ज्ञानपूर्वकं देवलोकादिब्रह्मलोकान्तप्राप्तिफलम्। (१)तथा च शास्त्रं "आत्मयाजी श्रेयान्देवयाजिनः" इत्यादि। स्मृतिश्च "द्विविधं कर्म वैदिकम्" इत्याद्या। साम्ये च धर्माधर्मयोः मनुष्यत्वप्राप्तिः। एवं ब्रह्माद्या स्थावरान्ता स्वाभाविकाविद्यादिदोषवती धर्माधर्मसाधनकृता संसारगतिः नामरूपकर्माश्रया तदेवेदं व्याकृतं साध्यसाधनरूपं जगत्प्रागुत्पत्तेरव्याकृतमासीत्। स एष बीजाङ्कुरादिवदविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपलक्षणः अनादिरनन्तोऽनर्थ इत्येतस्माद्विरक्तस्याविद्यानिवृत्तये तद्विपरीतब्रह्मविद्याप्रतिपत्त्यर्थोपनिषदारभ्यते।

अस्य त्वश्वमेधकर्मसम्बन्धिनो विज्ञानस्य प्रयोजनं—येषामश्वमेधे नाधिकारस्तेषामस्मादेव विज्ञानात्फलप्राप्तिः। "विद्यया वा कर्मणा वा" "तद्धैतल्लोकजिदेव" इत्येवमादिश्रुतिभ्यः। कर्मविषयत्वमेव विज्ञानस्येति चेन्न, "योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति विकल्पश्रुतेः। विद्याप्रकरणे चाम्नानात् कर्मान्तरे च सम्पादनदर्शनात् विज्ञानात्त फलप्राप्तिरस्तीत्यवगम्यते। सर्वेषां च कर्मणां परं कर्माश्वमेधः। समष्टिव्यष्टिप्राप्तिफलत्वात्। तस्य चेह ब्रह्मविद्याप्रारम्भ आम्नानं सर्वकर्मणां संसारविषयत्वप्रदर्शनार्थम्। तथाच दर्शयिष्यति फलमशनायामृत्युभावम्। न नित्यानां संसारविषयफलत्वमिति चेन्न, सर्वकर्मफलोपसंहारश्रुतेः। सर्वं हि पत्नीसम्बद्धं कर्म। 'जाया मे स्यादेतावान्वै कामः' इति निसर्गत एव सर्वकर्मणां काम्यत्वं दर्शयित्वा, पुत्र-

---

(२) तथा च शास्त्रमिति—सर्वत्र परमात्मभावनापुरःसरं नित्यं कर्मानुतिष्ठन्नात्मयाजीति। कामनापुरःसरं देवान् यजमानो देवयाजीति।

कर्मापरविद्यानां च 'अयं लोकः पितृलोको देवलोकः' इति फलं दर्शयित्वा, त्र्यन्नात्मकतां चान्ते उपसंहरिष्यति 'त्रयं वा इदं नाम रूपं कर्म' इति । सर्वकर्मणां फलं व्याकृतं संसार एवैतत् । इदमेव त्रयं प्रागुत्पत्तेस्तर्ह्यव्याकृतमासीत् । तदेव पुनः सर्वप्राणिकर्मवशाद्व्याक्रियते बीजादिव वृक्षः । सोऽयं व्याकृताव्याकृतरूपः संसारोऽविद्याविषयः क्रियाकारकफलात्मकतया आत्मरूपत्वेनाध्यारोपितः आत्मन्येव मूर्तामूर्ततद्वासनात्मकः । अतो विलक्षणोऽनामरूपकर्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि क्रियाकारकफलभेदादिविपर्ययेणावभासते । अतोऽस्मात्क्रियाकारकफलभेदस्वरूपात् एतावदिदमिति साध्यसाधनरूपाद्विरक्तस्य कामादिदोषकर्मबीजभूताविद्यानिवृत्तये रज्ज्वामिव सर्पविज्ञानापनयाय ब्रह्मविद्या आरभ्यते ।

तत्र तावदश्वमेधविज्ञानाय 'उषा वा अश्वस्य' इत्यादि । तत्राश्वविषयमेव दर्शनमुच्यते प्राधान्यादश्वस्य । प्राधान्यं च तन्नामाङ्कितत्वात्क्रतोः प्राजापत्यत्वाच्च ।

**ॐ । उषा वा अश्वस्य मेध्यस्य शिरः । सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माश्वस्य मेध्यस्य । द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसानि । ऊवध्यं सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥ १ ॥**

उषा इति, ब्राह्मो मुहूर्त उषाः । वैशब्दः स्मारणार्थः, प्रसिद्धं कालं स्मारयति । शिरः प्राधान्यात् । शिरश्च प्रधानं शरीरावयवानाम् । अश्वस्य मेध्यस्य मेधार्हस्य यज्ञियस्योषाः शिर इति सम्बन्धः । कर्माङ्गस्य पशोः संस्कर्तव्यत्वात्कालादिदृष्टयः शिरआदिषु क्षिप्यन्ते । प्राजापत्यत्वं च प्रजापतिदृष्ट्यध्यारोपणात् । काललोकदेवतात्वाध्यारोपणं च प्रजापतित्वकरणं पशोः । एवंरूपो

हि प्रजापतिः । विष्णुत्वादिकरणमिव प्रतिमादौ । सूर्यश्चक्षुः शिरसोऽनन्तरत्वात्सूर्याधिदैवतत्वाच्च । वातः प्राणो वायुस्वाभाव्यात् । व्यात्तं विवृतं मुखमग्निर्वैश्वानरः । वैश्वानर इत्यग्नेर्विशेषणम् । वैश्वानरो नामाग्निर्विवृतं मुखमित्यर्थो, मुखस्याग्निर्दैवतत्वात् । संवत्सर आत्मा । संवत्सरो द्वादशमासस्त्रयोदशमासो वा । आत्मा शरीरम् । कालावयवानां च संवत्सरः शरीरं, शरीरं चात्मा, 'मध्यं ह्येषामङ्गानामात्मा' इति श्रुतेः । अश्वस्य मेध्यस्येति सर्वत्रानुषङ्गार्थं पुनर्वचनम् । द्यौः पृष्ठं ऊर्ध्वत्वसामान्यात् । अन्तरिक्षमुदरं सुषिरत्वसामान्यात् । पृथिवी पाजस्यं पादस्यं, पाजस्यमिति वर्णव्यत्ययेन, (१)पादासनस्थानमित्यर्थः । दिशश्चतस्रोऽदि पार्श्वे पार्श्वेन दिशां सम्बन्धात् । पार्श्वयोर्दिशां च सङ्ख्यावैषम्यादयुक्तमिति चेन्न, सर्वमुखत्वोपपत्तेरश्वस्य पार्श्वाभ्यामेव सर्वदिशां सम्बन्धाददोषः । अवान्तरदिश आग्नेय्याद्याः पर्शवः पार्श्वास्थीनि । ऋतवोऽङ्गानि संवत्सरावयवत्वादङ्गसाधर्म्यात् । मासाश्चार्धमासाश्च पर्वाणि सन्धयः सन्धिसामान्यात् । अहोरात्राणि प्रतिष्ठाः । बहुवचनात्प्राजापत्यदैवपित्र्यमानुषाणि, प्रतिष्ठाः पादाः प्रतितिष्ठत्येतैरिति । अहोरात्रैर्हि कालात्मा प्रतितिष्ठत्यश्वश्च पादैः । नक्षत्राण्यस्थीनि शुक्लत्वसामान्यात् । नभो नभस्था मेघा अन्तरिक्षस्योदरत्वोक्तेः, मांसान्युदकरुधिरसेचनसामान्यात् । ऊवध्यं उदरस्थमर्धजीर्णमशनं सिकता विश्लिष्टावयवत्वसामान्यात् । सिन्धवः स्यन्दनसामान्यान्नद्यो गुदा नाड्यो बहुवचनाच्च । यकृच्च क्लोमानश्च हृदयस्याधस्ताद्दक्षिणोत्तरौ मांसखण्डौ । क्लोमान इति नित्यं बहुवचनमेकस्मिन्नेव । पर्वताः काठिन्यादुच्छ्रितत्वाच्च । ओषधयश्च क्षुद्राः स्थावरा, वनस्पतयो महान्तो, लोमानि केशाश्च यथासम्भवम् । उद्यन्नुद्गच्छन्भवति सविता आमध्याह्नादश्वस्य पूर्वार्धो नाभेरूर्ध्वमित्यर्थः । निम्लोचन्नस्तं यन्नामध्याह्नाज्जघनार्धोऽपरार्धः पूर्वापरत्वसाधर्म्यात् । यद्विजृम्भते गात्राणि विनामयति विक्षिपति तद्विद्योतते विद्योतनं मुखघनविदारणसामान्यात् यद्विधूनुते गात्राणि कम्पयति तत्स्तनयति गर्जनशब्दसामान्यात् । यन्मेहति मूत्रं करोत्यश्वस्तद्वर्षति वर्षणं तत् सेचनसामान्यात् । वागेव शब्द एवास्याश्वस्य वागिति, नात्र कल्पनेत्यर्थः ॥ १ ॥

(१) पादा अस्यन्ते यस्मिन्निति ।

**चेन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कं ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥ १ ॥**

अथाग्नेरश्वमेधोपयोगिकस्योत्पत्तिरुच्यते । तद्विषयदर्शनविवक्षयैवोत्पत्तिः स्तुत्यर्था । नैवेह किश्चनाग्र आसीत् । इह संसारमण्डले किश्चन किञ्चिदपि नामरूपप्रविभक्तविशेषं नैवासीत् न बभूव । अग्रे प्रागुत्पत्तेर्मनआदेः ।

किं शून्यमेव स्यात् नैहेव किश्चन इति श्रुतेः । न कार्यं कारणं वासीत् उत्पत्तश्च । उत्पद्यते हि घटः । अतः प्रागुत्पत्तेर्घटस्य नास्तित्वम् । ननु कारणस्य न नास्तित्वं मृत्पिण्डादिदर्शनात् । यन्नोपलभ्यते तस्यैव नास्तिता । अस्तु कार्यस्य न तु कारणस्य, उपलभ्यमानत्वात् । न । प्रागुत्पत्तेः सर्वानुपलम्भात् । अनुपलब्धिश्चेदभावहेतुः सर्वस्य जगतः प्रागुत्पत्तेर्न कारणं कार्यं वोपलभ्यते । तस्मात्सर्वस्यैवाभावोऽस्तु । न 'मृत्युनैवेदमावृतमासीत्' इति श्रुतेः । यदि हि किञ्चिदपि नासीत् येनाव्रियते यच्चाव्रियते तदा नावक्ष्यत् 'मृत्युनैवेदमावृतं' इति । न हि भवति गगनकुसुमच्छन्नो वन्ध्यापुत्र इति । ब्रवीति च 'मृत्युनैवेदमावृतमासीत्' इति । तस्माद्येनावृतं कारणेन, यच्चावृतं कार्यं, प्रागुत्पत्तेस्तदुभयमासीत् श्रुतेः प्रामाण्यादनुमेयत्वाच्च । अनुमीयते च प्रागुत्पत्तेः कार्यकारणयोरस्तित्वम् । कार्यस्य हि सतो जायमानस्य कारणे सत्युत्पत्तिदर्शनात्, असति चादर्शनात्, जगतोऽपि प्रागुत्पत्तेः कारणास्तित्वमनुमीयते घटादिकारणास्तित्ववत् । घटादिकारणस्याप्यसत्त्वमेव अनुपमृद्य मृत्पिण्डादिकं घटाद्यनुत्पत्तेरिति चेन्न, मृदादेः कारणत्वात् । मृत्सुवर्णादि हि तत्र कारणं घटरुचकादेः, न पिण्डाकारविशेषः । तदभावे भावात् । असत्यपि पिण्डाकारविशेषे मृत्सुवर्णादिकारणद्रव्यमात्रादेव घटरुचकादिकार्योत्पत्तिर्दृश्यते । तस्मान्न पिण्डकारविशेषो घटरुचकादिकारणम् । असति तु मृत्सुवर्णादिद्रव्ये घटरुचकादिर्न जायत इति मृत्सुवर्णादिद्रव्यमेव कारणं, नतु पिण्डाकारविशेषः । सर्वं हि कारणं कार्यमुत्पादयत्पूर्वोत्पन्नस्यात्मकार्यस्य तिरोधानं कुर्वत्कार्यान्तरमुत्पादयति । एकस्मिन्कारणे युगपदनेककार्यविरोधात् । न च पूर्वकार्योपमर्दे कारणस्य स्वात्मोपमर्दो भवति । तस्मात्पिण्डाद्युपमर्दे

कार्योत्पत्तिदर्शनमहेतुः प्रागुत्पत्तेः कारणास्तित्वे। पिण्डादिव्यतिरेकेण मृदादेरसत्त्वादयुक्तमिति चेत्। पिण्डादिपूर्वकार्योपमर्दे मृदादिकारणं नोपमृद्यते, घटादिकार्यान्तरेऽप्यनुवर्तते, इत्येतदयुक्तम्। पिण्डघटादिव्यतिरेकेण मृदादिकारणस्यानुपलम्भादिति चेन्न, मृदादिकारणानां घटाद्युत्पत्तौ पिण्डादिनिवृत्तावनुवृत्तिदर्शनात्। सादृश्यादन्वयदर्शनं न कारणानुवृत्तेरिति चेन्न, पिण्डादिगतानां मृदाद्यवयवानामेव घटादौ प्रत्यक्षेणानुमानाभासात्सादृश्यादिकल्पनानुपपत्तेः। न च प्रत्यक्षानुमानयोर्विरुद्धा व्यभिचारिता। प्रत्यक्षपूर्वकत्वादनुमानस्य सर्वत्रैवानाश्वासप्रसङ्गात्। यदि च क्षणिकं सर्वं तदेवेदमिति गम्यमानं तद्बुद्धेरप्यन्यद्बुद्ध्यपेक्षत्वे तस्या अप्यन्यतद्बुद्ध्यपेक्षत्वमित्यनवस्थायां तत्सदृशमिदमित्यस्या अपि बुद्धेर्मृषात्वात्सर्वत्रानाश्वासतैव। तदिदम्बुद्ध्योरपि कर्त्रभावे सम्बन्धानुपपत्तिः सादृश्यात्सम्बन्ध इति चेन्न, तदिदम्बुद्ध्योरितरेतरविषयत्वानुपपत्तेः। असति चेतरेतरविषयत्वे सादृश्यग्रहणानुपपत्तिः। असत्येव सादृश्ये तद्बुद्धिरिति चेन्न, तदिदम्बुद्ध्योरपि सादृश्यबुद्धिवदसद्विषयत्वप्रसङ्गात्। असद्विषयत्वमेव सर्वबुद्धीनामस्त्विति चेन्न, बुद्धिबुद्धेरप्यसद्विषयत्वप्रसङ्गात्। तदप्यस्त्विति चेन्न, सर्वबुद्धीनां मृषात्वेऽसत्यबुद्ध्यनुपपत्तेः। तस्मादसदेतत्सादृश्यात्तद्बुद्धिरिति। अतः सिद्धः प्राक्कार्योत्पत्तेः कारणसद्भावः।

कार्यस्य चाभिव्यक्तिलिङ्गत्वात्। कार्यस्य च सद्भावः प्रागुत्पत्तेः सिद्धः। कथमभिव्यक्तिलिङ्गत्वादभिव्यक्तिलिङ्गमस्येति। अभिव्यक्तिः साक्षाद्विज्ञानालम्बनत्वप्राप्तिः। यद्धि लोके प्रावृतं तमआदिना घटादिवस्तु तदालोकादिना प्रावरणतिरस्कारेण विज्ञानविषयत्वं प्राप्नुवत्प्राक्सद्भावं न व्यभिचरति। तथेदमपि जगत्प्रागुत्पत्तेरित्यवगच्छामः। न ह्यविद्यमानो घट उदितेऽप्यादित्ये उपलभ्यते। न, तेऽविद्यमानत्वाभावादुपलभ्येतैवेति चेत्। न हि तव घटादिकार्यं कदाचिदप्यविद्यमानमित्युदिते आदित्ये उपलभ्येतैव। मृत्पिण्डेऽसंनिहिते तमआद्यावरणे चासति विद्यमानत्वादिति चेन्न, द्विविधत्वादावरणस्य। घटादिकार्यस्य द्विविधं ह्यावरणं, मृदादेरभिव्यक्तस्य तमःकुड्यादि प्राङ्मृदोऽभिव्यक्तेर्मृदाद्यवयवानां पिण्डादिकार्यान्तररूपेण संस्थानम्। तस्मात्प्रागुत्पत्तेर्विद्यमानस्यैव घटादिकार्यस्य आवृतत्वादनुपलब्धिः। नष्टोत्पन्नभावाभावशब्दप्रत्ययभेदस्तु

अभिव्यक्तितिरोभावयोर्द्विविधत्वापेक्षः । पिण्डकपालादेरावरणवैलक्षण्यादयुक्तमिति चेत् । तमःकुड्यादि हि घटाद्यावरणं घटादिभिन्नदेशं दृष्टं, न तथा घटादिभिन्नदेशे दृष्टे पिण्डकपाले । तस्मात्पिण्डकपालसंस्थानयोर्विद्यमानस्यैव घटस्यावृतत्वात् अनुपलब्धिरित्ययुक्तं आवरणधर्मवैलक्षण्यादिति चेन्न, क्षीरोदकादेः क्षीराद्यावरणेनैकदेशत्वदर्शनात् । घटादिकार्ये कपालचूर्णाद्यवयवानां अन्तर्भावादनावरणत्वमिति चेन्न, विभक्तानां कार्यान्तरत्वादावरणत्वोपपत्तेः । आवरणाभावे एव यत्नः कर्तव्य इति चेत् । पिण्डकपालावस्थयोर्विद्यमानमेव घटादिकार्यमावृतत्वान्नोपलभ्यत इति चेत् । घटादिकार्यार्थिना तदावरणविनाशे एव यत्नः कर्तव्यो न घटाद्युत्पत्तौ । न चैतदस्ति । तस्मादयुक्तं, विद्यमानस्यैवावृतत्वादनुपलब्धिः इति चेन्न, अनियमात् । न हि विनाशमात्रप्रयत्नादेव घटाद्यभिव्यक्तिर्नियता । तमआद्यावृते घटादौ प्रदीपाद्युत्पत्तौ प्रयत्नदर्शनात् । सोऽपि तमोनाशायैवेति चेत् । दीपाद्युत्पत्तावपि यः प्रयत्नः सोऽपि तमस्तिरस्करणाय तस्मिन्नष्टे घटः स्वयमेवोपलभ्यते । न हि घटे किञ्चिदाधीयते इति चेन्न, प्रकाशवतो घटस्योपलभ्यमानत्वात् । यथा प्रकाशविशिष्टो घट उपलभ्यते प्रदीपकरणेन तथा प्राक्प्रदीपकरणात् । तस्मान्न तमस्तिरस्कारायैव प्रदीपकरणं, किं तर्हि प्रकाशवत्त्वाय । प्रकाशवत्त्वेनैवोपलभ्यमानत्वात् । क्वचिदावरणविनाशेऽपि यत्नः स्यात् । यथा कुड्यादिविनाशे । तस्मान्न नियमोऽस्त्यभिव्यक्त्यर्थिनावरणविनाश एव यत्नः कार्य इति । नियमार्थवत्त्वाच्च । कारणे वर्तमानं कार्यं कार्यान्तराणामावरणमित्यवोचाम । तत्र यदि पूर्वाभिव्यक्तस्य कार्यस्य पिण्डस्य व्यवहितस्य वा कपालस्य विनाशे एव यत्नः क्रियेत, तदा विदलचूर्णाद्यपि कार्यं जायेत । तेनाप्यावृतो घटो नोपलभ्यत इति पुनः प्रयत्नान्तरापेक्षैव । तस्मात् घटाद्यभिव्यक्त्यर्थिनो नियत एव कारकव्यापारोऽर्थवान् । तस्मात्प्रागुत्पत्तेरपि सदेव कार्यम् । अतीतानागतप्रत्ययभेदाच्च । अतीतो घटोऽनागतो घट इत्येतयोश्च प्रत्यययोर्वर्तमानघटप्रत्ययवन्न निर्विषयत्वं युक्तम् । अनागतार्थिप्रवृत्तेश्च । न ह्यसत्यर्थितया प्रवृत्तिर्लोके दृष्टा । योगिनां चातीतानागतज्ञानस्य सत्यत्वात् । असंश्चेद्भविष्यद्घट ऐश्वरम्भविष्यद्घटविषयं प्रत्यक्षज्ञानं मिथ्या स्यात् । न च प्रत्यक्षमुपचर्यते । घटसद्भावे ह्यनुमानमवोचाम ।

विप्रतिषेधात्। यदि घटो भविष्यतीति कुलालादिषु व्याप्रियमाणेषु घटार्थं प्रमाणेन निश्चितं, येन च कालेन घटस्य सम्बन्धो भविष्यतीत्युच्यते, तस्मिन्नेव काले घटोऽसन्निति विप्रतिषिद्धमभिधीयते। भविष्यन्घटोऽसन्निति, न भविष्यतीत्यर्थः। अयं घटो न वर्तत इति यद्वत्। अथ प्रागुत्पत्तेर्घटोऽसन्नित्युच्येत, घटार्थं प्रवृत्तेषु कुलालादिषु तत्र यथा व्यापाररूपेण वर्तमानास्तावत्कुलालादयः, तथा घटो न वर्तत इत्यसच्छब्दस्यार्थश्चेन्न विरुध्यते। कस्मात्। स्वेन हि भविष्यद्रूपेण घटो वर्तते। न हि पिण्डस्य वर्तमानता कपालस्य वा घटस्य भवति। न च तयोर्भविष्यत्ता घटस्य। तस्मात्कुलालादिव्यापारवर्तमानतायां प्रागुत्पत्तेर्घटोऽसन्निति न विरुध्यते। यदि घटस्य यत्स्वं भविष्यत्ताकार्यरूपं तत्प्रतिषिध्येत, तत्प्रतिषेधे विरोधः स्यात्। नतु तद्भवान्प्रतिषेधति। न च सर्वेषां क्रियावतां कारकाणामेकैव वर्तमानता भविष्यत्त्वं वा। अपि च चतुर्विधानामभावानां घटस्येतरेतराभावो घटादन्यो दृष्टो, यथा घटाभावः पटादिरेव न घटस्वरूपमेव। न च घटाभावः सन्पटोऽभावात्मकः, किं तर्हि भावरूप एव। एवं घटस्य प्राक्प्रध्वंसात्यन्ताभावानामपि घटादन्यत्वं स्यात्। घटेन व्यपदिश्यमानत्वात् घटस्येतरेतराभाववत्। तथैव भावात्मकताऽभावानाम्। एवं च सति घटस्य प्रागभाव इति न घटस्वरूपमेव प्रागुत्पत्तेर्नास्ति। अथ घटस्य प्रागभाव इति घटस्य यत्स्वरूपं तदेवोच्येत। घटस्येति व्यपदेशानुपपत्तिः। अथ कल्पयित्वा व्यपदिश्येत शिलापुत्रकस्य शरीरमिति यद्वत्। तथापि घटस्य प्रागभाव इति कल्पितस्यैवाभावस्य घटेन व्यपदेशो, न घटस्वरूपस्यैव। अथार्थान्तरं घटात् घटस्याभाव इति, उक्तोत्तरमेतत्। किञ्चान्यत्प्रागुत्पत्तेः शशविषाणवदभावभूतस्य घटस्य स्वकारणसत्तासम्बन्धानुपपत्तिः। द्विनिष्ठत्वात्सम्बन्धस्य। अयुतसिद्धानामदोष इति चेन्न, भावाभावयोरयुतसिद्धत्वानुपपत्तेः। भावभूतयोर्हि युतसिद्धताऽयुतसिद्धता वा स्यान्न तु भावाभावयोरभावयोर्वा। तस्मात्सदेव कार्यं प्रागुत्पत्तेरिति सिद्धम्।

किंलक्षणेन मृत्युनाऽऽवृतमित्यत आह—अशनायया अशितुमिच्छा अशनाया सैव मृत्योर्लक्षणं तया लक्षितेन मृत्युनाऽशनायया। कथमशनाया मृत्युरिति। उच्यते—अशनाया हि मृत्युः। हिशब्देन प्रसिद्धं हेतुमवद्योत-

यति। यो ह्यशितुमिच्छति सोऽशनायानन्तरमेव हन्ति जन्तून्। तेनासावशनायया लक्ष्यते मृत्युरित्यशनाया हीत्याह। बुद्ध्यात्मनोऽशनाया धर्म इति स एष बुद्ध्यवस्थो हिरण्यगर्भो मृत्युरित्युच्यते। तेन मृत्युनेदं कार्यमावृतमासीत्। यथा पिण्डावस्थया मृदा घटादय आवृताः स्युरिति तद्वत्। तन्मनोऽकुरुत। तदिति मनसो निर्देशः। स प्रकृतो मृत्युर्वक्ष्यमाणकार्यसिसृक्षया तत्कार्यालोचनक्षमं मनःशब्दवाच्यं सङ्कल्पादिलक्षणमन्तःकरणमकुरुत कृतवान्। केनाभिप्रायेण मनोऽकरोदिति उच्यते — आत्मन्वी आत्मवांस्यां भवेयम्। अहमनेनात्मना मनसा मनस्वी स्यामित्यभिप्रायः। स प्रजापतिरभिव्यक्तेन मनसा समनस्कः सन्नर्चन्नर्चयन्पूजयन् आत्मानमेव कृतार्थोऽस्मीत्यचरच्चरणमकरोत्। तस्य प्रजापतेरर्चतः पूजयत आपो रसात्मिकाः पूजाङ्गभूता अजायन्तोत्पन्नाः। अत्राकाशप्रभृतीनां त्रयाणामुत्पत्त्यनन्तरमिति वक्तव्यं, श्रुत्यन्तरसामर्थ्याद्विकल्पासम्भवाच्च सृष्टिक्रमस्य। अर्चते पूजां कुर्वते वै मे मह्यं कमुदकमभूदित्येवममन्यत यस्मान्मृत्युः, तदेव तस्मादेव हेतोरर्कस्य अग्नेरश्वमेधक्रत्वौपयोगिकस्यार्कत्वं अर्कत्वे हेतुरित्यर्थः। अग्नेरर्कनामनिर्वचनमेतत्। अर्चनात्सुखहेतुपूजाकरणात् अप्सम्बन्धाच्च अग्नेरेतद्गौणं नामार्क इति। य एवं यथोक्तमर्कस्यार्कत्वं वेद जानाति। कमुदकं सुखं वा नामसामान्यात्। ह वा इत्यवधारणार्थौ। भवत्येवेति। अस्मा एवंविदे एवंविदर्थं भवति॥ १॥

**आपो वा अर्कस्तद्यदपां शर आसीत्तत्समहन्यत। सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्तताग्निः॥ २॥**

आपो वा अर्कः। कः पुनरसावर्क इति। उच्यते— आपो वै या अर्चनाङ्गभूतास्ता एवार्कोऽग्नेरर्कस्य हेतुत्वात्। अप्सु चाग्निः प्रतिष्ठित इति। न पुनः साक्षादेवार्कस्ताः, तासामप्रकरणात्। अग्नेश्च प्रकरणम्। वक्ष्यति च 'अयमग्निरर्कः' इति। तत्तत्र यदपां शर इव शरो दध्न इव मण्डभूतमासीत्तत्समहन्यत सङ्घातमापद्यत तेजसा बाह्यान्तःपच्यमानं, लिङ्गव्यत्ययेन वा योऽपां शरः स समहन्यतेति। सा पृथिव्यभवत्स सङ्घातो येयं पृथिवी साभवत्। ताभ्योऽद्भ्यो अण्डमभिनिर्वृत्तमित्यर्थः। तस्यां पृथिव्यामुत्पादितायां स मृत्युः

प्रजापतिश्राम्यच्छ्रमयुक्तो बभूव । सर्वो हि लोकः कार्यं कृत्वा श्राम्यति । प्रजापतेश्च तन्महत्कार्यं यत्पृथिवीसर्गः । किं तस्य श्रान्तस्येत्युच्यते— तस्य श्रान्तस्य तप्तस्य खिन्नस्य तेजोरसस्तेज एव रसस्तेजोरसो, रसः सारो, निरवर्तत प्रजापतिशरीरान्निष्क्रान्त इत्यर्थः । कोऽसौ निष्क्रान्तः । अग्निः सोऽण्डस्यान्तर्विराट्प्रजापतिः प्रथमजः कार्यकरणसङ्घातवान् जातः । "स वै शरीरी प्रथमः" इति स्मरणात् ॥ २ ॥

**स त्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयं स एष प्राणस्त्रेधा विहितः । तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मौ । अथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥**

स च जातः प्रजापतिस्त्रेधा त्रिप्रकारमात्मानं स्वयमेव कार्यकरणसङ्घातं व्यकुरुत व्यभजादित्येतत् । कथं त्रेधेत्याह— आदित्यं तृतीयमग्निवाय्वपेक्षया त्रयाणां पूरणं अकुरुतेत्यनुवर्तते । तथाग्न्यादित्यापेक्षया वायुं तृतीयम् । तथा वाय्वादित्यापेक्षयाग्निं तृतीयमिति द्रष्टव्यम् । सामर्थ्यस्य तुल्यत्वात्त्रयाणां सङ्ख्यापूरणत्वे । स एष प्राणः सर्वभूतानामात्मापि अग्निवाय्वादित्यरूपेण विशेषतः स्वेनैव मूर्त्यात्मना त्रेधा विहितो विभक्तो न विराट्स्वरूपोपमर्दनेन । तस्यास्य प्रथमजस्य अग्नेः अश्वमेधोपयोगिकस्याग्नेः विराजोऽश्वात्मकस्य अश्वस्येव दर्शनमुच्यते । सर्वा हि पूर्वोक्तोपनिषत्स्तुत्यर्थेनवोनाम — इत्यसौ शुद्धजन्मेति । तस्य प्राची दिक्शिरो विशिष्टत्वसामान्यात् । असौ चासौ चैशान्याग्नेय्यौ ईर्मौ बाहू । ईरयतेर्गतिकर्मणः । अथास्याग्नेः प्रतीची दिक्पुच्छं जघन्यो भागः । प्राङ्मुखस्य प्रत्यग्दिक्सम्बन्धात् । असौ चासौ च वायव्यनैर्ऋत्यौ सक्थ्यौ सक्थिनी पृष्ठकोणत्वसामान्यात् । दक्षिणा चोदीची च पार्श्वे उभयदिक्सम्बन्धसामान्यात् । द्यौः पृष्ठमन्तरिक्षमुदरमिति पूर्ववत् । इयमुरः अधोभागसामान्यात् । स एषोऽग्निः प्रजापतिरूपो लोकात्मकोऽग्निरप्सु प्रतिष्ठितः । 'एवमिमे लोका अप्स्वन्तः' इति श्रुतेः । यत्र क च यस्मिन्कस्मिंश्चिदेति

गच्छति तदेव तत्रैव प्रतितिष्ठति स्थितिं लभते । कोऽसौ ? एवं यथोक्तमस्तु प्रतिष्ठितत्वमग्नेर्विद्वान्विजानन् गुणफलमेतत् ॥ ३ ॥

**सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनं समभवदशनाया मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवत्। न ह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभः । यावान्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत । तं जातमभिव्याददात्स भाणकरोत्सैव वागभवत् ॥ ४ ॥**

सोऽकामयत योऽसौ मृत्युः सोऽबादिक्रमेणात्मनात्मानं अण्डस्यान्तः कार्यकरणसङ्घातवन्तं विराजमग्निमसृजत, त्रेधा चात्मानमकुरुतेत्युक्तम् । स किं व्यापारः सन्नसृजतेति । उच्यते — स मृत्युरकामयत कामितवान् । किम् । द्वितीया मे ममात्मा शरीरं येनाहं शरीरी स्यां स जायेतोत्पद्येत इत्येवमेतदकामयत । स एवं कामयित्वा मनसा पूर्वोत्पन्नेन वाचं त्रयीलक्षणां मिथुनं द्वन्द्वभावं समभवत्सम्भवनं कृतवान्मनसा त्रयीमालोचितवान् । त्रयीविहितं सृष्टिक्रमं मनसान्वालोचयदित्यर्थः । कोऽसौ ? अशनायया लक्षितो मृत्युः । अशनाया मृत्युरित्युक्तम् । तमेव परामृशत्यन्यत्र प्रसङ्गो मा भूदिति । तद्यद्रेत आसीत् । तत्तत्र मिथुने यद्रेत आसीत्प्रथमशरीरिणः प्रजापतेरुत्पत्तौ कारणं रेतो बीजं ज्ञानकर्मरूपं त्रय्यालोचनायां यत् दृष्टवानासीज्जन्मान्तरकृतम् । तद्भावभावितोऽपः सृष्ट्वा तेन रेतसा बीजेनाप्स्वनुप्रविश्य अण्डरूपेण गर्भीभूतः स संवत्सरोऽभवत्संवत्सरकालनिर्माता संवत्सरः प्रजापतिरभवत् । न ह पुरा पूर्वं ततस्तस्मात्संवत्सरकालनिर्मातुः प्रजापतेः, संवत्सरः कालो नाम नास न बभूव ह । तं संवत्सरकालनिर्मातारमन्तर्गर्भं प्रजापतिं यावानिह प्रसिद्धः काल एतावन्तमेतावत्संवत्सरपरिमाणं कालमबिभः भृतवान्मृत्युः । यावान्संवत्सर इह प्रसिद्धस्ततः परस्तात्किं कृतवान् । तमेतावतः कालस्य संवत्सरमात्रस्य परस्तादूर्ध्वमसृजत सृष्टवानण्डमभिनदित्यर्थः । तमेवं कुमारं जातमग्निं प्रथमशरीरिणमशनायावत्त्वान्मृत्युः अभिव्याददान्मुखविदारणं कृतवानत्तुम् । स च कुमारो भीतः स्वाभाविक्याऽविद्यया युक्तो भाणित्येवं शब्दमकरोत् । सैव वागभवद्वाक्शब्दोऽभवत् ॥ ४ ॥

**स ऐक्षत यदि वा इममभिमंस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदं सर्वमसृजत यदिदं किञ्चर्चो यजूंषि सामानि छन्दांसि यज्ञान्प्रजाः पशून् । स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वं सर्वस्यैत(१)स्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥ ५ ॥**

स ऐक्षत, स एवं भीतं कृतरवं कुमारं दृष्ट्वा मृत्युरीक्षितवान् अशनायावानपि — यदि कदाचिद्वा इमं कुमारमभिमंस्ये। अभिपूर्वो मन्यतिर्हिंसार्थः। हिंसिष्य इत्यर्थः। कनीयोऽन्नं करिष्ये कनीयोऽल्पमन्नं करिष्य इति। एवमीक्षित्वा तद्भक्षणादुपरराम। बहु ह्यन्नं कर्तव्यं दीर्घकालभक्षणाय न कनीयः। तद्भक्षणे हि कनीयोऽन्नं स्याद्बीजभक्षण इव सस्याभावः। स एवं प्रयोजनमन्नबाहुल्यमालोच्य तयैव त्रय्या वाचा पूर्वोक्तया तेनैव चात्मना मनसा मिथुनीभावमालोचनमुपगम्योपगम्येदं सर्वं स्थावरं जङ्गमं चासृजत यदिदं किञ्च यत्किञ्चेदम्। किं तत्। ऋचो यजूंषि सामानि छन्दांसि च सप्त गायत्र्यादीनि स्तोत्रशस्त्रादिकर्मसाधनभूतांस्त्रिविधान्मन्त्रान्गायत्र्यादिच्छन्दोविशिष्टान्यज्ञांश्च तत्साध्यान्प्रजास्तत्कर्त्रीः पशूंश्च ग्राम्यारण्यान्कर्मसाधनभूतान्। ननु त्रय्या मिथुनीभूतयाऽसृजतेत्युक्तम्, ऋगादीनिह कथमसृजदिति। नैष दोषः। मनःसम्बन्धिनोऽयं मिथुनीभावस्त्रय्या, बाह्यास्तु ऋगादीनां विद्यमानानामेव कर्मसु विनियोगभावेन व्यक्तीभावः सर्ग इति। स प्रजापतिरेवमन्नवृद्धिं बुद्ध्वा यद्यदेव क्रियां क्रियासाधनं फलं वा किञ्चिदसृजत तत्तदत्तुं भक्षयितुमध्रियत धृतवान्मनः। सर्वं कृत्स्नं वै यस्मादत्तीति तत्तस्माददितेरदितिनाम्नो मृत्योरदितित्वं प्रसिद्धम्। तथाच मन्त्रः 'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता" इत्यादिः। सर्वस्यैतस्य जगतोऽन्नभूतस्यात्ता सर्वात्मनैव भवत्यन्यथा विरोधात्। न हि कश्चित्सर्वस्यैकोऽत्ता दृश्यते तस्मात्सर्वात्मा भवतीत्यर्थः। सर्वमस्यान्नं भवति अत एव सर्वात्मनो ह्यत्तुः सर्वमन्नं भवतीत्युपपद्यते। य एवमेतद्यथोक्तमदितेर्मृत्योः प्रजापतेः सर्वस्य अदनाददितित्वं वेद तस्यैतत्फलम् ॥ ५ ॥

---

(१) ब्रह्मसूत्र अ. १-२-९

**सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति । सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्। प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरं श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ॥ ६ ॥**

सोऽकयतेत्यश्वाश्वमेधयोः निर्वचनार्थमिदमाह । भूयसा महता यज्ञेन भूयः पुनरपि यजेयेति । जन्मान्तरकरणापेक्षया भूयःशब्दः । स प्रजापतिः जन्मान्तरेऽश्वमेधेनायजत । स तद्भावभावितः एव कल्पादौ व्यावर्तत । सोऽश्वमेधक्रियाकारकफलात्मत्वेन निर्वृत्तः सन्नकामयत भूयसा यज्ञेन भूयो यजेयेति। एवं महत्कार्यं कामयित्वा लोकवदश्राम्यत्। स तपोऽतप्यत। तस्य श्रान्तस्य तप्तस्येति पूर्ववत्। यशो वीर्यमुदक्रामदिति स्वयमेव पदार्थमाह—प्राणाश्चक्षुरादयो वै यशो, यशोहेतुत्वात् तेषु हि सत्सु ख्यातिर्भवति। तथा वीर्यं बलमस्मिञ्शरीरे। न ह्युत्क्रान्तप्राणो यशस्वी बलवान्वा भवति। तस्मात्प्राणा एव यशो वीर्यं चास्मिञ्शरीरे। तदेवं प्राणलक्षणं यशो वीर्यमुदक्रामदुत्क्रान्तवत्। तदेवं यशोवीर्यभृते प्राणेषूत्क्रान्तेषु शरीरान्निष्क्रान्तेषु तच्छरीरं प्रजापतेः श्वयितुमुच्छूनभावं गन्तुमध्रियतामेध्यं चाभवत्। तस्य प्रजापतेः शरीरान्निर्गतस्यापि तस्मिन्नेव शरीरे मन आसीत्। यथा कस्यचित्प्रिये विषये दूरं गतस्यापि मनो भवति तद्वत् ॥ ६ ॥

**सोऽकामयत मेध्यं म इदं स्यादात्मन्व्यनेन स्यामिति। ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्। एष ह वा अश्वमेधं वेद य एनमेवं वेद। तमनवरुध्यैवामन्यत। तं संवत्सरस्य परस्तादात्मन आलभत। पशून्देवताभ्यः प्रत्यौहत्। तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्ते। एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्मायमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ(१)। सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति**

---

(१) अर्काश्वमेधशब्दः देवताद्वन्द्ववाचकः तै० सं० २।२।७।५ ।

**मृत्युरस्यात्मा भवत्येतासां देवतानामेको भवति ॥ ७ ॥ इति द्वितीयं ब्राह्मणम् ॥**

स तस्मिन्नेव शरीरे गतमनाः सन्किमकरोदिति उच्यते—सोऽकामयत, कथं, मेध्यं मेध्यार्हं यज्ञियं मे ममेदं शरीरं स्यात्। किञ्च आत्मन्व्यात्मवांश्चानेन शरीरेण शरीरवान्स्यामिति प्रविवेश। यस्मात्तच्छरीरं तद्वियोगाद्गतयशोवीर्यं सदश्वदश्वयत् ततस्तस्मादश्वः समभवत्। ततोऽश्वनामा प्रजापतिरेव साक्षादिति स्तूयते। यस्माच्च पुनस्तत्प्रवेशाद्गतयशोवीर्यत्वादमेध्यं सन्मेध्यमभूत्तदेव तस्मादेवाश्वमेधस्याश्वमेधनाम्नः क्रतोरश्वमेधत्वं अश्वमेधनामलाभः। क्रियाकारकफलात्मको हि क्रतुः। स च प्रजापतिरेवेति स्तूयते।

क्रतुनिर्वर्तकस्याश्वस्य प्रजापतित्वमुक्तं 'उषा वा अश्वस्य मेध्यस्य' इत्यादिना। तस्यैवाश्वस्य मेध्यस्य प्रजापतिस्वरूपस्याग्नेश्च यथोक्तस्य क्रतुफलात्मरूपतया समस्योपासनं विधातव्यमित्यारभ्यते। पूर्वत्र क्रियापदस्य विधायकस्याश्रुतत्वात् क्रियापदापेक्षत्वाच्च प्रकरणस्य अयमर्थोऽवगम्यते। एष ह वा अश्वमेधं क्रतुं वेद य एनमेवं वेद, यः कश्चिदेनमश्वमग्निरूपमर्कं च यथोक्तमेव वक्ष्यमाणेन समासेन प्रदर्श्यमानेन विशेषणेन विशिष्टं वेद, स एषोऽश्वमेधं वेद नान्यः। तस्मादेवं वेदितव्य इत्यर्थः। कथं, तत्र पशुविषयमेव तावद्दर्शनमाह। तत्र प्रजापतिर्भूयसा यज्ञेन भूयो यजेयेति कामयित्वा आत्मानमेव पशुं मेध्यं कल्पयित्वा तं पशुं अनवरुध्यैवोत्सृष्टं पशुमवरोधमकृत्वैव मुक्तप्रग्रहमन्वचिन्तयत् तं संवत्सरस्य पूर्णस्य परस्तादूर्ध्वमात्मने आत्मार्थमालभत। प्रजापतिदेवताकत्वेनेत्येतत् आलम्भमालम्भं कृतवान्। पशूनन्यान्ग्राम्यानारण्यांश्च देवताभ्यो यथादेवतं प्रत्यौहत्प्रतिगमितवान्। यस्माच्चैवं प्रजापतिरमन्यत तस्मादेवमन्योऽप्युक्तेन विधिनात्मानं पशुमश्वं मेध्यं कल्पयित्वा —सर्वदेवत्योऽहं प्रोक्ष्यमाण आलभ्यमानस्त्वहं मद्देवत्य एव स्याम्, अन्य इतरे पशवो ग्राम्यारण्या यथादेवतमन्याभ्यो देवताभ्य आलभ्यन्ते मदवयवभूताभ्य एव—इति विद्यात्। अत एवेदानीं सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्ते याज्ञिकाः। एवमेष ह वा अश्वमेधो य एष तपति। यस्त्वेवं पशुसाधनकः क्रतुः स एष साक्षात्फलभूतो निर्दिश्यते एष ह वा अश्वमेधः। कोऽसौ।

य एव सविता तपति जगदवभासयति तेजसा। तस्यास्य क्रतुफलात्मनः संवत्सरः कालविशेषः, आत्मा शरीरं तन्निर्वर्त्यत्वात्संवत्सरस्य। तस्यैव क्रत्वात्मनः। अग्निसाध्यत्वाच्च फलस्य क्रतुत्वरूपेणैव निर्देशः। अयं पार्थिवोऽग्निरर्कः साधनभूतः। तस्य चार्कस्य क्रतौ चित्यस्येमे लोकास्त्रयोऽप्यात्मानः शरीरावयवाः। तथाच व्याख्यातं 'तस्य प्राची दिक्' इत्यादिना। तावग्न्यादित्यावेतौ यथाविशेषितावर्काश्वमेधौ क्रतुफले। अर्को यः पार्थिवोऽग्निः स साक्षात्क्रतुरूपः क्रियात्मकः। क्रतोरग्निसाध्यत्वात्तद्रूपेणैव निर्देशः। क्रतु-साध्यत्वाच्च फलस्य क्रतुरूपेणैव निर्देश आदित्योऽश्वमेध इति। तौ साध्य-साधनौ क्रतुफलभूतावग्न्यादित्यौ, सा उ पुनर्भूय एकैव देवता भवति। का सा, मृत्युरेव। पूर्वमप्येकैवासीत्क्रियासाधनफलभेदाय विभक्ता। तथा चोक्तम् 'स त्रेधात्मानं व्यकुरुत' इति। सा पुनरपि क्रियानिर्वृत्त्युत्तरकालमेकैव देवता भवति मृत्युरेव फलरूपः। यः पुनरेवमेनमश्वमेधं मृत्युमेकां देवतां वेद अहमेव मृत्युरस्म्यश्वमेध एका देवता मद्रूपा अश्वाग्निसाधनसाध्येति। सोऽपजयति पुनर्मृत्युं पुनर्मरणं, सकृन्मृत्वा पुनर्मरणाय न जायत इत्यर्थः। अपजितोऽपि य मृत्युरेनं पुनराप्नुयादित्याशङ्क्याह— नैनं मृत्युराप्नोति। कस्मात् मृत्युरस्यैवं-विद आत्मा भवति। किञ्च मृत्युरेव फलरूपः सन्नेतासां देवतानामेको भवति। तस्यैतत्फलम् ॥ ७ ॥ इति द्वितीयं ब्राह्मणम् ॥

द्वया हेत्यादेरस्य कः सम्बन्धः कर्मणां ज्ञानसहितानां परा गतिरुक्ता। मृत्य्वात्मभावोऽश्वमेधगत्युक्त्या। अथेदानीं मृत्य्वात्मभावसाधनभूतयोः कर्म-ज्ञानयोर्यत उद्भवः तत्प्रकाशनार्थमुद्गीथब्राह्मणमारभ्यते।

ननु मृत्य्वात्मभावः पूर्वत्र ज्ञानकर्मणोः फलमुक्तम्। उद्गीथज्ञानकर्मणोस्तु मृत्य्वात्मभावातिक्रमणं फलं वक्ष्यति। अतो भिन्नविषयत्वात्फलस्य न पूर्वकर्म ज्ञानोद्भवप्रकाशनार्थमिति चेत्। नायं दोषः। अग्न्यादित्यात्मभावत्वादुद्गीथ-फलस्य। पूर्वत्राप्येतदेव फलमुक्तं 'एतासां देवतानामेको भवति' इति। ननु 'मृत्युमतिक्रान्त' इत्यादि विरुद्धम्। न। स्वाभाविकपाप्मासङ्गविषयत्वाद-तिक्रमणस्य। कोऽसौ स्वाभाविकः पाप्मासङ्गो मृत्युः? कुतो वा तस्योद्भवः?

केन वा तस्यातिक्रमणम् ? कथं वा ? इत्येतस्यार्थस्य प्रकाशनायाख्यायिकारभ्यते । कथम्—

**द्वया ह प्राजापत्या देवाश्चासुराश्च । ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥ १ ॥**

द्वया द्विप्रकाराः । हेति पूर्ववृत्तावद्योतको निपातः । वर्तमानप्रजापतेः पूर्वजन्मनि यत् वृत्तं तदवद्योतयति हशब्देन । प्राजापत्याः प्रजापतेर्वृत्तजन्मावस्थस्यापत्यानि प्राजापत्याः । के ते । देवाश्चासुराश्च । तस्यैव प्रजापतेः प्राणा वागादयः । कथं पुनस्तेषां देवासुरत्वम् । उच्यते— शास्त्रजनितज्ञानकर्मभाविता द्योतनाद्देवा भवन्ति । त एव स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्मज्ञानभाविता असुराः । स्वेष्वेवासुषु रमणात् सुरेभ्यो वा देवेभ्योऽन्यत्वात् । यस्माच्च दृष्टप्रयोजनज्ञानकर्मभाविता असुराः, ततस्तस्मात्कानीयसाः, कनीयांस एव कानीयसाः, स्वार्थेऽणि वृद्धिः । कनीयांसोऽल्पा एव देवाः । ज्यायसा असुरा ज्यायांसोऽसुराः । स्वाभाविकी हि कर्मज्ञानप्रवृत्तिर्महत्तरा प्राणानां शास्त्रजनितायाः कर्मज्ञानप्रवृत्तेः दृष्टप्रयोजनत्वात् । अत एव कनीयस्त्वं देवानां शास्त्रजनितप्रवृत्तेरल्पत्वात् । अत्यन्तयत्नसाध्या हि सा । ते देवाश्चासुराश्च प्रजापतिशरीरस्था एषु लोकेषु निमित्तभूतेषु स्वाभाविकेतरकर्मज्ञानसाध्येषु अस्पर्धन्त स्पर्धां कृतवन्तः । देवानां चासुराणां च वृत्त्युद्भवाभिभवौ स्पर्धा । कदाचिच्छास्त्रजनितकर्मज्ञानभावनारूपा वृत्तिः प्राणानामुद्भवति । यदा चोद्भवति तदा दृष्टप्रयोजना प्रत्यक्षानुमानज्ञानकर्मभावनारूपा तेषामेव प्राणानां वृत्तिरासुर्यभिभूयते । स देवानां जयोऽसुराणां पराजयः । कदाचित्तद्विपर्ययेण देवानां वृत्तिरभिभूयते, आसुर्या उद्भवः । सोऽसुराणां जयो देवानां पराजयः । एवं देवानां जये धर्मभूयस्त्वादुत्कर्ष आ प्रजापतित्वप्राप्तेः । असुरजयेऽधर्मभूयस्त्वादपकर्ष आ स्थावरत्वप्राप्तेः । उभयसाम्ये मनुष्यत्वप्राप्तिः । त एवं कनीयस्त्वादभिभूयमाना असुरैर्देवा बाहुल्यादसुराणां किं कृतवन्त इत्युच्यते— ते देवा असुरैरभिभूयमाना ह किलोचुरुक्तवन्तः । कथम् । हन्तेदानीं

दुहितुः पाण्डित्यं गृहतन्त्रविषयमेव । वेदेऽनधिकारात् । तिलौदनं कृशरम् ॥ १७ ॥

**अथ य इच्छेत्पुत्रो मे पण्डितो विगीतः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति मांसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्षेण वाऽऽर्षभेण वा ॥ १८ ॥**

विविधं गीतो विगीतः प्रख्यात इत्यर्थः । समितिंगमः सभां गच्छतीति प्रगल्भ इत्यर्थः । पाण्डित्यस्य पृथग्ग्रहणात् । शुश्रूषितां श्रोतुमिष्टां रमणीयां वाचं भाषिता संस्कृताया अर्थवत्या वाचो भाषितेत्यर्थः । मांसमिश्रमोदनं मांसौदनम् । तन्मांसनियमार्थमाह—औक्षेण वा मांसेन । उक्षा सेचनसमर्थः पुंगवस्तदीयं मांसम् । ऋषभस्ततोऽप्यधिकवयाः तदीयमार्षभं मांसम् ॥ १८ ॥

**अथाभिप्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां सं जायां पत्या सहेति ॥ १९ ॥**

अथाभिप्रातरेव काले अवघातनिर्वृत्तांस्तण्डुलानादाय स्थालीपाकावृता स्थालीपाकविधिना आज्यं चेष्टित्वा आज्यसंस्कारं कृत्वा चरुं श्रपयित्वा स्थालीपाकस्याहुतीर्जुहोति, उपघातमुपहत्योपहत्याग्नये स्वाहेत्याद्याः । गार्ह्यः सर्वो विधिर्द्रष्टव्योऽत्र । हुत्वोद्धृत्य चरुशेषं प्राश्नाति । स्वयं प्राश्येतरस्याः पत्न्यै प्रयच्छत्युच्छिष्टम् । प्रक्षाल्य पाणी आचम्योदपात्रं पूरयित्वा तेनोदकेनैनां त्रिरभ्युक्षत्यनेन मन्त्रेणोत्तिष्ठात इति, सकृन्मन्त्रोच्चारणम् ॥ १९ ॥

**अथैनामभिपद्यतेऽमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहं सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि संरभावहै सह रेतो दधावहै पुंसे पुत्राय वित्तय इति ॥ २० ॥**

अथैनामभिमन्त्र्य क्षीरौदनादि यथापत्यकामं भुक्त्वेति क्रमो द्रष्टव्यः । संवेशनकालेऽमोऽहमस्मीत्यादिमन्त्रेणाभिपद्यते ॥ २०

**अथास्या ऊरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते। गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके॥ गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ॥ २१॥**

अथास्या ऊरू विहापयति 'विजिहीथां द्यावापृथिवी' इत्यनेन। तस्यामर्थमित्यादि पूर्ववत्। त्रिरेनां शिरःप्रभृत्यनुलोमामनुमार्ष्टि विष्णुर्योनिमित्यादि प्रतिमन्त्रम्॥ २१॥

**हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ। तं ते गर्भं हवामहे दशमे मासि सूतये। यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी। वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति॥ २२॥**

अन्ते नाम गृह्णात्यसाविति तस्याः॥ २२॥

**सोष्यन्तीमद्भिरभ्युक्षति। यथा वायुः पुष्करिणीं समिङ्गयति सर्वतः। एवा ते गर्भ एजतु सहावैतु जरायुणा। इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः। तमिन्द्र निर्जहि गर्भेण सावरांसहेति॥ २३॥**

सोष्यन्तीमद्भिरभ्युक्षति प्रसवकाले सुखप्रसवनार्थमनेन मन्त्रेण। 'यथा वायुः पुष्करिणीं समिङ्गयति सर्वतः। एवा ते गर्भ एजतु' इति॥ २३॥

**जातेऽग्निमुपसमाधायाङ्क आधाय कंसे पृषदाज्यं सन्नीय पृषदाज्यस्योपघातं जुहोत्यस्मिन्सहस्रं पुष्यासमेधमानः स्वे गृहे। अस्योपसन्द्यां मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा। मयि प्राणांस्त्वयि मनसा जुहोमि स्वाहा। यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टं सुहुतं करोतु नः स्वाहेति॥ २४॥**

अथ जातकर्म। जातेऽग्निमुपसमाधायाङ्क आधाय पुत्रं, कंसे पृषदाज्यं

मन्नीय संयोज्य दधिघृते, पृषदाज्यस्योपघातं जुहोति अस्मिन्सहस्रं इत्याद्यावापस्थाने ॥ २४ ॥

**अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधि मधु घृतं सन्नीयानन्तर्हितेन जातरूपेण प्राशयति। भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवःस्वः सर्वं त्वयि दधामीति ॥**

अथास्य दक्षिणं कर्णमभिनिधाय स्वं मुखं वाग्वागिति त्रिर्जपेत । अथ दधि मधु घृतं सन्नीय अनन्तर्हितेनाव्यवहितेन जातरूपेण हिरण्येन प्राशयत्येतैर्मन्त्रैः प्रत्येकम् ॥ २५ ॥

**अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥ २६ ॥**

अथास्य नामधेयं करोति वेदोऽसीति । तदस्य तद्गुह्य नाम भवति वेद इति ॥ २६ ॥

**अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः। येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति ॥ २७ ॥**

अथैनं मात्रे प्रदाय स्वाङ्कस्थं स्तनं प्रयच्छति यस्ते स्तन इत्यादि मन्त्रेण ॥ २७ ॥

**अथास्य मातरमभिमन्त्रयते । इलासि मैत्रावरुणी वीरे वीरमजीजनत्। सा त्वं वीरवती भव याऽस्मान्वीरवतोऽकरदिति। तं वा एतमाहुरतिपिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥ २८ ॥ इति चतुर्थं ब्राह्मणम् ॥**

अथास्य मातरमभिमन्त्रयते इलाऽसीत्यनेन । तं वा एतमाहुरिति —अनेन विधिना जातः पुत्रः पितरं पितामहं चातिशेते इति श्रिया यशसा ब्रह्मवर्चसेन परमां निष्ठां प्राप्तदित्येवं स्तुत्यो भवतीत्यर्थः । यस्य चैवंविदो ब्राह्मणस्य पुत्रो जायते, स चैव स्तुत्यो भवतीत्यध्याहार्यम् ॥ २८ ॥

अथ वंश । पौतिमाषीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रः कौशिकीपुत्रात्कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्र काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥ १ ॥

आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः साङ्कृतीपुत्रात्साङ्कृतीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात्साञ्जीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥ २ ॥

याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान्बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपो कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ३ ॥

समानमा साञ्जीवीपुत्रात्साञ्जीवीपुत्रो माण्डूकायनेर्मा
कायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहि
र्वामकक्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्
द्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञव
राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजा
प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ ५ ॥

इति वाजसनेयके बृहदारण्यकोपनिषदि षष्ठोऽध्यायः ॥

अथेदानीं समस्तप्रवचनवंशः । स्त्रीप्राधान्यात् । गुणवान्पुत्रो
प्रस्तुतम् । अतः स्त्रीविशेषणेनैव पुत्रविशेषणादाचार्यपरम्परा कीर्त्यते । ता
शुक्लानीत्यव्यामिश्राणि ब्राह्मणेन । अथवा यानीमानि यजूंषि तानि शुक्लानि
तत् । प्रजापतिमारभ्य यावत्पौतिमाषीपुत्रः, तावदधोमुखो नियताचार्यपूर्व
वंशः समानमा साञ्जीवीपुत्रात् । ब्रह्मणः प्रवचनाख्यस्य । तदेतद्ब्रह्म प्रजा
प्रबन्धपरम्परयाऽऽगत्य अस्मास्वनेकधा विप्रसृतमनाद्यनन्तं स्वयम्भु ब्रह्म नित्यं
तस्मै ब्रह्मणे नमः नमः र्तिभ्यो गुरुभ्यः ॥ ५ ॥

इति श्री श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्री यकोप यं समाप्तम् ॥

श्रीशंकराचार्यग्रन्थावली

प्रथमो भागः

# ईशादिदशोपनिषदः

# TEN PRINCIPAL UPANIṢADS WITH ŚĀṄKARABHĀṢYA

There are over one hundred Upaniṣads, of which, the following ten commented upon by Śaṅkarācārya, are regarded as genuine and, therefore, most authoritative: Īśa, Kena, Kaṭha, Praśna, Muṇḍaka, Māṇḍūkya, Taittirīya, Aitareya, Chāndogya and Bṛhadāraṇyaka.

The Īśa-Upaniṣad teaches that both knowledge (*vidyā*) and action (*avidyā*) are necessary for attaining immortality. The Kenopaniṣad lays down that Brahman alone is the power that makes the senses function. The Kaṭhopaniṣad contains the famous dialogue between Naciketā and Yama. The Praśnopaniṣad contains Pippalāda's answers to philosophical questions put by his six disciples. The Muṇḍakopaniṣad classifies knowledge into *Parā* and *Aparā* and discusses the nature and the means of meditation upon Brahman, its result and, *Brahmanirvāṇa*. The Māṇḍūkyopaniṣad describes, in course of explaining *oṁkāra*, the three stages of soul, known as *Jāgarita*, *Svapna* and *Susupti*, as well as the fourth stage of *Advaita*. The Taittirīyopaniṣad deals with certain *Dhyānas* and instructions as [illegible] to the realisation of Brahman. The Aitareyopaniṣad discusses cosmogony, rebirth and immortality. The Chāndogyopaniṣad discusses, inter alia, the significance of the mystic syllable *oṁ*, meaning of *Gāyatrī*, the problem of being and non-being, appearance and reality, individual and universal spirit, subtlety and immanence of Atman, self and reality, etc. And, lastly, the Bṛhadāraṇyakopaniṣad contains some interesting parables and accounts of philosophical importance, ritualistico-philosophical description of the cosmos, poetico-physiological description of the self etc.

---


MOTILAL BANARSIDASS

*Delhi Mumbai Ch[illegible] [illegible]galore*

*Varanas[illegible]*

ISBN: 81-208-0285-3 (Cloth) Rs. 495

ISBN: 81-208-02[illegible]6-1 (Paper) Rs. 395